॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

६३

रूपमालायां

# धातुपर्यायसङ्ग्रहः


लेखकः—

डॉ० ब्रह्मानन्द त्रिपाठी

साहित्य आयुर्वेद-आचार्यः

एम० ए०, पी-एच० डी०, डी० एस सी० ए०





चौखम्बा सुरभारती प्रकाशन

वाराणसी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

६३



रूपमालायां

# धातुपर्यायसङ्ग्रहः

लेखक :—

**डॉ० ब्रह्मानन्द त्रिपाठी**

साहित्य आयुर्वेद-आचार्यः

एम० ए०, पी-एच० डी०, डी० एस सी० ए०



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक—

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पोस्ट बाक्स नं० १२९

वाराणसी २२१००१



प्रथम संस्करण १९८३

मूल्य [redacted]

4/2

अन्य प्राप्तिस्थान—

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पोस्ट बाक्स नं० ६९

वाराणसी २२१००१

दूरभाष : { ६३०७६ दुकान
५५३५७ निवास

मुद्रक—

**श्रीजी मुद्रणालय**

वाराणसी

# आमुख

संस्कृत वाङ्मय की अनेक शाखायें हैं। उनके उपासकों ने समय-समय पर उन-उन क्लिष्टतम विषयों को सरल करने के अनेक प्रशंसनीय सफल प्रयास किये हैं, जो समय के आवर्तों में लुप्तप्राय हो जाते हैं। व्याकरणशास्त्र अत्यन्त गहन है, इसको सरल करने का एक स्तुत्य प्रयास भट्टिकाव्य की रचना है। इस प्रकार के अनेक प्रयास विद्वानों ने और भी किये हैं। गद्य-पद्य लेखन में एकार्थवाची विविध शब्दों का ज्ञान होने के साथ ही साथ समानार्थक धातुपर्यायों की जानकारी का होना भी अत्यावश्यक है, उसकी पूर्ति प्रस्तुत कृति से होगी।

ग्रन्थ-परिचय—विजयानन्दसूरि कृत 'क्रियाकलाप' तथा भट्टमल्ल विरचित 'आख्यातचन्द्रिका' ये दोनों ही ऐसे प्राचीन ग्रन्थ हैं जिनमें धातुओं के पर्याय रूपों का बुद्धिपूर्वक संग्रह किया गया है। प्रस्तुत धातुपर्यायसङ्ग्रह के उक्त दोनों ही उपजीव्य ग्रन्थ हैं।

उद्देश्य—इस लघुकाय ग्रन्थ में उपर्युक्त ग्रन्थों के सारगर्भित समस्त अंशों का चयन इस दृष्टि से करने का अधिकाधिक प्रयास किया गया है कि अलग-अलग ग्रन्थों के समानार्थक धातुओं के पर्याय एक स्थान पर मिल सकें जिससे अन्वेषक को धातुपर्याय ढूंढने में कष्ट की अनुभूति न हो। इसमें अनेक सुप्रसिद्ध एवं दैनिक प्रयोग में आने वाले धातुओं के पर्यायवाची रूप श्लोकों में वर्गीकृत हैं। इन सभी धातुओं के रूप लट्-लकार प्रथम पुरुष एकवचन में दिये गये हैं। इनको याद कर लेने से आपका ज्ञान धातुपर्याय के क्षेत्र में निश्चित ही समृद्ध हो जायेगा। तदनन्तर आप अपनी भाषा को समृद्ध कर सकेंगे।

उपयोगिता—शास्त्री, आचार्य तथा इनके समकक्ष अन्य उच्च परीक्षाओं में अनिवार्य रूप से निर्धारित पद्य एवं गद्य रचना का अभ्यास करने-कराने के

लिये यह ग्रन्थ छात्रों का अत्यन्त उपकारक है और काव्य-रचना व्यसनियों को इसका सदैव संग्रह करना चाहिये। इतने संक्षेप में इस प्रकार का सरल सरस 'धातुपर्यायसंग्रह' अन्यत्र दुर्लभ है। एक शब्द या क्रिया का बार प्रयोग करना लेखक या कवि की दरिद्रता को सूचना देता हुआ भाषा-सौ को नष्ट कर देता है।

समर्पण—अतः प्रस्तुत 'धातुपर्यायसंग्रह' पद-प्रयोग परायण पण्डितों पाठकों के पाणि-पल्लवों में सादर समर्पित करते हुए परम प्रसन्नता का अनु हो रहा है।

साधुवाद—चौखम्बा सुरभारती परिवार इसके लिये धन्यवाद का अधि है, जिसने तन, मन, धन से इसका प्रकाशन कर आपके कर-कमलों तक पहुँ का सफल प्रयास किया है।

विनयावनत—

ब्रह्मानन्द त्रिपा

॥ श्रीः ॥

# रूपमालायां

# धातुपर्यायसङ्ग्रहः

## वस्तुनिर्देशः

काव्यनिर्माणदाक्षिण्य-प्राप्तिकामैकचेतसाम् ।
कण्ठहारोपमा भाति रूपमालेयमद्भुता ॥ १ ॥
पुनरुक्त्यादिदोषाणां परीहारपरायणा ।
कृतिरेषा सुधीवृन्द-पुरस्ताद् राजतां भुवि ॥ २ ॥
तारादत्ततनूजेन ब्रह्मानन्दत्रिपाठिना ।
सम्पादिता प्रयत्नेन खवेदाभ्रयुगेऽब्दके ॥ ३ ॥

सृजति करोति प्रणयति घटयति निर्माति निर्मिमीते च ।
अनुतिष्ठति विदधाति च रचयति कल्पयति चेति करणार्थाः ॥ १ ॥
आचरति साधयति निर्वर्तयति प्रयुङ्क्ते च ।
सम्पादयति निष्पादयतीति च विरलमेव कृतौ ॥ २ ॥
कृतौ करोति कुरुते विधत्ते विदधाति च ।
तनुते वितनोत्यत्र सृजत्युत्पादयत्यपि ॥ ३ ॥
निर्मिमीते भावयति निर्माति रचयत्यपि ।
निष्पादयति निर्वर्तयति साधयतीति च ॥ ४ ॥
विस्तारणे तनोति प्रस्तारयति प्रपञ्चयत्यपि च ।
विस्तारयति प्रथयति विस्फारयति विसारयति ॥ ५ ॥
ग्रथ्नाति ग्रन्थयति ग्रन्थति सन्दृभति च प्रबध्नाति ।
सन्दर्भयति च गुम्फति सूत्रयतीति स्मृता ग्रथने ॥ ६ ॥
निबध्नाति च ग्रथ्नाति ग्रन्थति ग्रन्थयत्यपि ।
गुम्फने सन्दृभति च गुम्फते चेति षट् क्रियाः ॥ ७ ॥

उत्पादने प्रसूते प्रसौति प्रसुवति प्रवर्तयति ।
उत्पादयति च जनयत्युद्गमयत्यादधात्यपि च ॥ ८ ॥
कथिताः करणे तनने ग्रथने चोत्पादने च ये पूर्वम् ।
ते धातवः स्पृशन्ति प्रायस्तुल्यार्थतामेव ॥ ९ ॥
भावे भवत्युदेति प्रवर्तते जायते च सिध्यति च ।
उत्पद्यते च सम्पद्यते च निष्पद्यते फलति ॥ १० ॥
सत्तायामस्त्यास्ते जागर्ति विद्यते ध्रियते ।
ग्रहणे पुनरादत्ते गृह्णाति गृह्यते लाति ॥ ११ ॥
सत्तायामस्ति भवति विद्यते चाथ जन्मनि ।
उत्पद्यते जायते च सम्भवत्युद्भवत्यपि ॥ १२ ॥
विन्दत्यासादयति प्रपद्यते चाश्नुतेऽधिगच्छति च ।
प्रतिपद्यते च लभते प्राप्नोत्यासीदतीति लाभार्थाः ॥ १३ ॥
प्रोक्ता भावे च सत्तायां ग्रहणेऽपि च याः पुरा ।
क्रियास्ता अपि युज्यन्ते प्राप्त्यर्थे लक्षणावशात् ॥ १४ ॥
लम्भयति प्रापयति च गमयति नयतीति नयनार्थाः स्युः ।
प्रेरणविधौ प्रयुङ्क्ते नुदति प्रेरयति च प्रवर्तयति ॥ १५ ॥
विसृजति च विसर्जयति प्रहिणोति प्रेषयत्यपि च ।
प्रस्थापयतीति बुधैः सम्प्रेषणविषयिणः ख्याताः ॥ १६ ॥
ऋच्छति विचरति याति विसर्पत्ययत्ययते ।
एतीर्यति जिहीते सरति व्रजतीति कीर्तिता गमने ॥ १७ ॥
आगमने गमनार्थाः समभ्युपाङ्भ्यः पराः कथिताः ।
आपतति चोपतिष्ठत्युपनयति तथोपसादयति ॥ १८ ॥
सञ्चरणे सञ्चरति क्रामति चानन्तरं परिभ्रमणे ।
भ्राम्यत्यटति प्रस्थाने तु प्रतिष्ठते चलति ॥ १९ ॥
दधते दधाति धरति च धारयति वहति कलयति च ।
आलम्बते बिभर्त्ति च मलते चेत्यधिकृता धरणे ॥ २० ॥
ग्रहणे प्रापणे यानेऽप्ययने सेवनेऽपि याः ।
क्रियास्ता अपि युज्यन्ते धारणे लक्षणावशात् ॥ २१ ॥

भजति श्रयत्युपास्ते शीलत्युपतिष्ठते च शीलयति।
उपचरति च परिचरति निषेवते च प्रसादयति ॥ २२ ॥
वरिवस्यत्यन्वास्ते जुषते शुश्रूषतेऽनुकूलयति।
आराध्नोत्याराध्यत्याराधयतीति सेवायाम् ॥ २३ ॥
पश्यति विभावयत्यपि विलोकते वीक्षते विलोकयति।
निध्यायत्यन्विष्यत्यन्वेषयति च गवेषयति ॥ २४ ॥
चापयति निभालयत्यपि निरूपयत्यपि निशामयति।
मार्गयति मृगयतेऽपि च मार्गति चेत्याहुरीक्षार्थाः ॥ २५ ॥
ज्ञाने मनुते बोधत्यवधरति च बुध्यतेऽवधारयति।
अवयाति चावगच्छत्यवैति लक्षयति वेत्ति जानाति ॥ २६ ॥
ज्ञाने जानाति जानीते वेत्ति वेदावबुध्यते।
प्रत्येति मनुते चोपलभते प्रतिपद्यते ॥ २७ ॥
अवगच्छति चावैति मन्यते चाधिगच्छति।
विना कर्मात्मनेऽपि स्यात् संवेत्तीति चतुष्टयम् ॥ २८ ॥
गृह्णाति च क्वचिज्ज्ञाने नीवदी च क्वचिद् यथा।
विद्यासु नयते प्राज्ञो वदते वा सुपण्डितः ॥ २९ ॥
चित्ते मनस्युरसिषु करोति कुरुते पदे।
एवं विचार्य योक्तव्या ज्ञानार्थान्येऽपि धातवः ॥ ३० ॥
ज्ञानार्था दर्शनार्थाश्च सन्ति ये केऽपि धातवः।
ते वहन्ति यथौचित्यमविभेदं परस्परम् ॥ ३१ ॥
द्रढने निर्धारयति प्रमाति निर्णयति सम्प्रधारयति।
द्रढयति च निश्चिनोति च परिच्छिनत्ति प्रमाणयति ॥ ३२ ॥
निश्चिनुते निर्णयते निर्णयति च निर्णयेऽध्यवस्यति च।
निष्टङ्कयति च सप्त निर्धारयतीह निश्चिनोति स्युः ॥ ३३ ॥
विमृशत्यालोचयति च वितर्कयत्यूहते विचारयति।
आलोचते न मनुते विशङ्कते मन्यते च सूचयति ॥ ३४ ॥
विन्ते चानुमिमीतेऽनुमाति मीमांसते विकल्पयति।
उन्नयति च विचिकित्सति विविनक्तीति विचारार्थाः ॥ ३५ ॥

दोलायते विमुह्यति सन्दिग्धे दोलयत्यपि च ।
संशेते च भ्रमति भ्राम्यति चेत्यभिहिता भ्रान्तौ ॥ ३६ ॥
प्रश्नप्रकाशके चार्थेऽनुयुङ्क्ते पृच्छतीत्यपि ।
आह्वानव्यञ्जकेऽर्थे तु ह्वयत्याकारयत्यपि ॥ ३७ ॥
आदिष्टावाज्ञपयत्याज्ञापयति च नियोजयति ।
व्यापारयति नियुङ्क्ते निदिशत्यपि शास्ति चादिशति ॥ ३८ ॥
आलपति रपति जल्पत्युदीरयत्यनुपसर्गेऽपि ।
उच्चरति व्याहरति च वदति च निगदत्युदाहरति ॥ ३९ ॥
वक्ति ब्रवीति चाचष्टे भाषतेऽभिदधाति च ।
गृणाति भणतीत्येवं जल्पनार्थस्य वाचकाः ॥ ४० ॥
आचष्टे वक्ति वदति लपत्याख्याति भाषते ।
अभिधत्ते परस्मै च ब्रूते व्याहरतेऽत्रपम् ॥ ४१ ॥
गृणात्युदीरयति च कीर्तयत्यालपत्यपि ।
वदत्यपि भणत्यत्र कथयत्यपि वासति ॥ ४२ ॥
उक्तावावेदयति च क्रिया अष्टादशोदिताः ।
कथने तु निवेदयते कथयति निदिशति च प्रकीर्तयति ॥ ४३ ॥
आख्यात्यावेदयति शंसति सूचयति पिशुनयति ।
धातवः कथनस्यार्थे ये केऽपि परिकीर्तिताः ॥ ४४ ॥
यथौचित्यं प्रकल्प्यन्ते जल्पनार्थेऽपि ते बुधैः ।
नादे पटहादीनां स्वनति ध्वनति च रणत्यपि च ॥ ४५ ॥
निनदे जलदादीनां रसति स्वनयति च गर्जयति ।
रवीति रौति नदति ध्वनति ध्वनयत्यपि ॥ ४६ ॥
शब्दायते स्वनति च ध्वनावष्टौ रणत्यपि ।
रटतीति कुत्सितरवे भृङ्गरवे झङ्करोति गुञ्जति च ॥ ४७ ॥
प्रायः कूजति नदति क्वणति विरौतीति पक्षिणां निनदे ।
पठने पठितः प्राज्ञैरभ्यस्यति गृणाति च ॥ ४८ ॥
अधीते शिष्यते तद्वत्पठत्याम्नतीत्यपि ।
अध्यापनेऽभिधेया विनयत्यध्यापयत्यपि च ॥ ४९ ॥

व्युत्पादयति च शास्ति च पाठयति शिक्षयत्यपि च।
व्याख्याने व्याख्याति व्याचष्टे व्याकरोति विवृणोति ॥ ५० ॥
सङ्ख्याने सञ्चष्टे गणयति सङ्ख्याति सङ्ख्ययति।
व्याख्याति व्याकरोत्यत्र व्याचष्टेऽर्थापयत्यपि ॥ ५१ ॥
तथा व्याकुरुते वक्ति व्यनक्ति व्यञ्जयत्यपि।
एवं प्रकाशयत्यत्र विवृतौ स्फुटयत्यपि ॥ ५२ ॥
उद्घाटयत्युद्घटयत्यपि व्यक्तीकरोति च।
रक्षार्थविषये पाति गोपायति भुनक्ति च ॥ ५३ ॥
रक्षति त्रायते शास्ति पालयत्यवतीत्यपि।
आप्लवनेऽभिषुणोति स्नातीति स्नाननिर्माणे ॥ ५४ ॥
परिधानविधौ वस्ते संव्ययति च परिदधाति च।
अर्चायां पुनरर्चत्यर्चयति तथाऽर्चते च पूजयति ॥ ५५ ॥
अर्हति महति महयत्यञ्चति चेत्याहुरर्चायाम्।
स्मरणे स्मरति ध्यायत्यध्येति च चिन्तयत्यथ प्रणतौ ॥ ५६ ॥
प्रणमति नमस्करोति प्रणिपतति च वन्दते नमस्यति च।
स्मरणे त्वभिजानाति स्मरत्यध्येति च त्रयम् ॥ ५७ ॥
उत्कण्ठते तथोत्कण्ठत्युत्कण्ठयति चेत्यपि।
अभिवादयति प्रणतावुपसङ्गृह्णाति चात्मने द्वितयम् ॥ ५८ ॥
नमति नमस्यति षट् स्युः प्रणिपतति वन्दने चात्र।
स्तवने नौति स्तौति प्रशंसते श्लाघते च वर्णयति ॥ ५९ ॥
ईट्टे कवयति कवते विकत्थते चाभिनन्दति च।
स्तुतौ पणायति द्वे च नौति स्तौत्यात्मनेऽपि च ॥ ६० ॥
अष्टौ स्तवीतोडयति वन्दते च प्रशंसति।
क्वचित्तु श्लाघत इति स्तुतावेव पदं विदुः ॥ ६१ ॥
तपस्यति तपःशब्दे सत्यसत्यपि कर्मणि।
तप्यते तु तपःशब्दे कर्मणीति तपःकृतौ ॥ ६२ ॥
इच्छति वाञ्छति काङ्क्षति कामयते लिप्सते वष्टि।
ईप्सत्यपेक्षते च स्पृहयति गृध्यति च लुभ्यति च ॥ ६३ ॥

अभ्यर्थयते नाथति वृणोति वरयति वृणीते च ।
अर्दति मार्गति मार्गयति याचति याचतेऽर्थनार्थाः स्युः ॥ ६४ ॥
अभिलष्यत्यभिलषत्यात्मनेऽप्यनुरुध्यते ।
आकाङ्क्षति स्पृहयति नाथ ( ध ) ते वष्टि लिप्सते ॥ ६५ ॥
आशंसते कामयते वाञ्छतीच्छत्यभीप्सति ।
समीहते तथाऽऽशास्ते वाञ्छायां तिथिसङ्ख्यकाः ॥ ६६ ॥
आशंसते धनायति समीहते तद्वदाशास्ते ।
अन्विष्यत्यभिलषतीत्यभिलाषे कविभिरुद्दिष्टाः ॥ ६७ ॥
ददते ददाति दिशति च विश्राणयति प्रयच्छति च ।
उत्सृजति राति वितरत्यर्पयतीति स्मृता दाने ॥ ६८ ॥
दाने ददाति दत्ते च ददते वितरत्यपि ।
प्रयच्छत्यर्पयति च दिशते दिशति क्वचित् ॥ ६९ ॥
अपवर्जति च स्पर्शयति विश्राणयत्यपि ।
तथा विलभते राति प्रतिपादयतीत्यपि ॥ ७० ॥
कवलयति भक्षयति च प्साति च कवलीकरोति खादति च ।
आहरति चाभ्यवहरत्यपि च भुङ्क्ते च विष्वणति ॥ ७१ ॥
अश्नाति गिलति जक्षिति चर्वति च प्रत्यवस्यति ग्रसते ।
अवलेढि जमति च खादयति जेमति ग्रासे ॥ ७२ ॥
बुभुक्षते क्षुध्यति च जिघत्सत्यशनायति ।
जेमत्यश्नाति चरति भक्षयत्यत्ति खादति ॥ ७३ ॥
भुङ्क्ते तृणोति तर्णोति तथाऽभ्यवहरत्यपि ।
आत्मने च त्रयं प्साति जक्षिति प्रत्यवस्यति ॥ ७४ ॥
उपयुङ्क्ते च भुक्तौ स्युः दन्तच्छेदेन चर्वति ।
आदयत्यात्मनेऽप्यत्र भोजयत्यादि भोजने ॥ ७५ ॥
तृष्णात्युदन्यति तथा पिपासतीत्यपि च पातुमिच्छायाम् ।
पानविधौ पिबति धयत्याचमति पीयते रसत्यपि च ॥ ७६ ॥
उपवेशने निषीदत्युपविशति निविशते चास्ते ।
नृत्यविधाने नृत्यति नटति च रङ्गति विलसति च ॥ ७७ ॥

त्यजति जहाति विमुञ्चत्युज्झत्युत्सृजति परिहरत्यपि च ।
वर्जयति रेचयत्यपि रपयति विरहयति विघटयति ॥ ७८ ॥
विश्लेषयति संन्यस्यत्यपास्यति निरस्यति ।
वियुङ्क्ते विप्रयुङ्क्ते च वियौतीत्युज्झने मताः ॥ ७९ ॥
त्यागे त्यजत्युत्सृजति जहात्युज्झति मुञ्चति ।
उत्सृज्यते विसृजति मुञ्चते रहयत्यपि ॥ ८० ॥
स्वीकारे परिगृह्णात्यूरीपूर्वं करोत्युरीपूर्वम् ।
उररीकरोति चाङ्गीकरोति च स्वीकरोति चाद्रियते ॥ ८१ ॥
अङ्गीकारे प्रतिशृणोत्यत्र सङ्गिरतेऽपि च ।
अकर्मकं संशृणुते परस्मै चेत् सकर्मकम् ॥ ८२ ॥
ऊर्यूररर्युररीभ्यश्च करोति कुरुते पदे ।
अष्टौ स्युः प्रतिजानीतेऽभ्युपैत्यभ्युपगच्छति ॥ ८३ ॥
विरमत्यपैति शाम्यत्युपरमति च तद्वदारमति ।
नश्यति निवर्तते च व्येतीति च विरतिविषयाः स्युः ॥ ८४ ॥
शमयति हरत्यपोहति विनत्यपनयति नदति नाशयति ।
विरमयति चोपरमयत्यपगमयति चापसारयति ॥ ८५ ॥
लुम्पति च निवर्तयति च मार्जयति मार्जति मार्ष्टि दूरयति ।
अपसर्पति च क्षपयत्यस्यति च प्रोञ्छतीति शमनार्थाः ॥ ८६ ॥
अनुपूर्वा गत्यर्था हरति विदधते करोति विदधाति ।
संवदति विडम्बयति च तुलयति चेत्यनुकृतौ कथिताः ॥ ८७ ॥
वर्जयति जयति लङ्घयति तर्जयति हसति चैव भर्त्सयते ।
अधरयति व्यर्थयति गलहस्तयति च तृणीकरोत्यपि च ॥ ८८ ॥
नीचैःकरोति पश्चात्करोति च न्यङ्करोति निकरोति ।
अपि धिक्करोत्यपकरोत्यपि तिरस्करोत्यपि च ॥ ८९ ॥
अधरीकरोति च लघूकरोति विफलीकरोति विफलयति ।
ह्रेपयति त्रपयति च व्रीडयति च लज्जयति च ॥ ९० ॥
निम्नयति न्यञ्चयति च नमयति वितथीकरोति वितथयति ।
अभिभवति पराभवति च परिभवतीत्यपि पराभवने ॥ ९१ ॥

निन्दायामाक्रोशति गर्हति गर्हयति गर्हते द्वेष्टि ।
अक्षिपति शपति निन्दत्यपवदति जुगुप्सते विगायति च ॥ ९२ ॥
जुगुप्सते तु निन्दायां गर्हते गर्हयत्यपि ।
आक्षिपत्यात्मनेऽपि द्वे उपक्रोशति निन्दति ॥ ९३ ॥
तथा भर्त्संयते कुत्सयते गञ्जति च क्वचित् ।
भयदे निन्दने तर्जत्यत्र तर्जयतेऽपि च ॥ ९४ ॥
ज्ञेया विलङ्घनायां विलङ्घते कारकान्वितश्चासौ च ।
अत्युपसर्गोपेतः क्रामति शेते च गत्यर्थाः ॥ ९५ ॥
अतिक्रामत्युच्चरते तथाऽतिचरतीत्यपि ।
अत्येत्युल्लङ्घयत्याद्या धातवः स्युरतिक्रमे ॥ ९६ ॥
विधुतौ विधुनोति विनाऽवेन समं मन्यते च मानयति ।
जानाति धीरयत्यपि गणयति हेलयति चेत्यवेन युताः ॥ ९७ ॥
प्रतिषेधे निरुणद्धि प्रत्यादिशति च निवारयति ।
प्रतिहन्त्यपाकरोति च निकरोति च नियन्त्रयति ॥ ९८ ॥
विघ्नयति निषेधयति प्रत्याख्याति च निषेधतीत्यपि च ।
प्रतिषेधति नियमयति प्रतिषेधयति च नियच्छति च ॥ ९९ ॥
परिभवने निन्दायां विलङ्घते विगणने निराकरणे ।
ये धातवोऽत्र कथिताः प्रायस्तेषामभेदोऽस्ति ॥ १०० ॥
चोरयति स्तेनयति च मुष्णाति क्वचन मुष्यतीत्यपि च ।
अपहरति लुण्ठयत्यपि लुण्ठयति चेति स्मृताः स्तेये ॥ १०१ ॥
द्रोहविधाने दुह्यति वञ्चत्यपि संदधाति वञ्चयति ।
छलयति च विप्रलभते प्रतारयति च निमीलयति ॥ १०२ ॥
वञ्चने विप्रलभते तथा वञ्चयतेऽपि च ।
आत्मने च द्वयं विप्रकरोति निकरोति च ॥ १०३ ॥
अत्रोल्लापयते चाभिसन्धत्ते छलयत्यपि ।
प्रतारयति चैवाभिसन्दधाति विचत्यपि ॥ १०४ ॥
मुकुलयति मुद्रयति च सङ्कोचयति च निमीलयति ।
मीलाकृतौ, हठकृतौ त्वपकर्षत्याच्छिनत्ति हरतीति ॥ १०५ ॥

दाहे दहति प्लोषत्योषति च पुष्यतीत्यथ क्षोदे ।
मृद्नाति म्रदयति च क्षुनत्ति दलयति पिनष्टि चूर्णयति ॥ १०६ ॥
द्यति शकलयति भेत्ति च्छिनत्ति कृन्तति विदारयत्यपि च ।
छ्यति वृश्चति च लुनाति च खण्डयति भिनत्ति चेति भेदार्थाः ॥ १०७ ॥
हन्ति हिनस्ति निशुम्भति हिंसयति ध्वंसते निगृह्णाति ।
नाशयति निबर्हयति निबर्हते सूदते च सूदयति ॥ १०८ ॥
संहरति च निर्दलयति निर्वासयति प्रवासयति ।
उद्वासयति च शास्ति विशसति शमयति च दमयति च ॥ १०९ ॥
उन्मूलयति शृणाति च लुम्पति निर्मूलयत्यपि च ।
उत्खनति चोद्धरति च व्यापादयति च विपादयति ॥ ११० ॥
उज्जासयति मथ्नाति मारयत्युच्छिनत्ति च ।
तृणेढि च क्षिणोतीति हननार्थप्रकाशकाः ॥ १११ ॥
द्रोहे निमीलने च प्रसभहृतौ प्लोषणे च दलने च ।
हनने च धातवो ये हिंसार्थेऽप्युद्भवस्तेषाम् ॥ ११२ ॥
हिनस्ति संज्ञपयति सूदते हन्ति तर्दति ।
प्रमापयत्यर्दयते निबर्हयति हिंसति ॥ ११३ ॥
तृणेढि घातयति च शृणात्युज्जासयत्यपि ।
प्रतिष्किरत्यालभते कषते मारयत्यपि ॥ ११४ ॥
कषत्युन्माथयत्यत्र क्षिणोतीत्यात्मनेऽपि च ।
क्षेणोति द्वे विशसति निस्तर्हयति रध्यति ॥ ११५ ॥
षड्विंशतिः सूदयति हिंसायां हिंसयत्यपि ।
कृणोति कृणुते पुथ्यत्यपि क्रथति तुम्फति ॥ ११६ ॥
मीनात्युन्नाटयत्याद्या हिंसायां विरलोदयाः ।
अर्दने लुम्बयत्यत्र लुम्बत्यर्दत्यपि त्रयम् ॥ ११७ ॥
आहन्ति ताडयति चेत्याहतौ च भिदोदये ।
विदीर्यते च दलति स्फुटत्यपि च भिद्यते ॥ ११८ ॥
विदीर्णत्वे विदलति विशीर्यति च सीदति ।
विदीर्यति स्फोटति च फलतीति च षट् क्रियाः ॥ ११९ ॥

आयस्यति ताम्यति च श्राम्यति परिखिद्यते प्रयस्यति च ।
ग्लायति म्लायति च क्रामति चेति श्रमे कथिताः ॥ १२० ॥
दुःखायते विषीदति विखिद्यते तप्यते तथोद्विजते ।
निर्विद्यते च विमनीभवति च विमनायते व्यथते ॥ १२१ ॥
क्लिश्यति क्लिश्यते चैव दूयते दुर्मनायते ।
दुर्मनाभवतीत्येवं वेदनार्थनिवेदकाः ॥ १२२ ॥
पीडयति नुदति रुजति व्यथयति दुःखाकरोति दुःखयति ।
अर्दयति कदर्थयति क्लिश्नाति च बाधतेऽर्दतेऽर्दति च ॥ १२३ ॥
विधुरयति विह्वलयति ग्लपयति खेदयति तापयति ।
उन्मनयति दुनोति च दुर्मनयति चेति पीडनार्थाः स्युः ॥ १२४ ॥
अभ्युद्गतावुद्भवति प्रादुरस्त्याविरस्ति च ।
उन्मीलत्याविरास्ते च प्रादुरास्ते प्रकाशते ॥ १२५ ॥
उदयत्युदेत्युदयते रोहत्युन्मिषति चोज्जिहीते च ।
प्रादुर्भवत्युदञ्चत्याविर्भवति च तथोच्चरति ॥ १२६ ॥
हर्षे हृष्यति तुष्यति रमते च प्रीयते नन्दति च ।
निर्वाति निर्वृणोति च सुखायते मोदते च माद्यति च ॥ १२७ ॥
सुखायति सुखाकरोति च निर्वापयति प्रियाकरोत्यपि च ।
आप्यायते धिनोति च रमयति तोषयति तर्पयति ॥ १२८ ॥
प्रह्लादयति च मदयत्यानन्दयति प्रमोदयति ।
प्रीणाति प्रीणयति च पृणातीति प्रीणनार्थाः स्युः ॥ १२९ ॥
उन्मीलने विकसति प्रबुध्यते भिद्यते च विदलयति ।
उन्मीलत्युन्मिषति च विजृम्भते स्फुटति वोच्छ्वसिति ॥ १३० ॥
विकसनकृतौ भिनत्ति प्रबोधयत्यपि विकासयति ।
उन्मीलयति च दलयत्युन्निद्रयति च विनिद्रयति ॥ १३१ ॥
वृद्ध्यर्थे कथिता वृद्धैर्वर्धते तद्वदेधते ।
ऋध्नोति ऋध्यते द्वे च स्फायते चोपचीयते ॥ १३२ ॥
प्ररोहते विसरति प्रक्षरत्यतिरिच्यते ।
भृशायते तथा मूर्च्छत्युत्सर्पति विसर्पति ॥ १३३ ॥

वृद्धिभेदे समृद्ध्याख्ये समृद्ध्यति महीयते।
आप्यायते स्फायते च क्रमते प्रथतेऽपि च ॥ १३४ ॥
ऋद्ध्यत्यृध्नोति च तथा पूर्यते च नव क्रियाः।
वृद्धौ तु सविकारायां श्वयत्युच्छ्वयतीत्युभे ॥ १३५ ॥
वृद्धिकृतौ मेदुरयति कन्दलयत्युपचिनोति विशिनष्टि।
उद्वेलयति च पुष्यति पुष्णाति प्रचुरयत्यपि च ॥ १३६ ॥
पुष्टौ पुषिः पृथुगणे प्रथमोपदिष्टः
क्रैयादिक स च दिवादिषु सम्प्रदिष्टः।
रूपत्रयं त्रिषु गणेषु पुषेः प्रवेशात्
पुष्णाति पुष्यति कृते शपि पोषतीति ॥ १३७ ॥
दृप्यत्यहङ्करोति च गर्वति गर्वायते च गर्वयते।
अवलिप्यते च माद्यत्येवंरूपाः स्मृता दर्पे ॥ १३८ ॥
शक्तौ प्रभवति विभवत्युत्सहते च प्रगल्भते तरति।
शक्नोति समर्थयते पारयतीष्टेऽध्यवस्यति क्षमते ॥ १३९ ॥
तुल्यं पर्यनुसंयोगे युङ्क्ते प्रतिभिनत्ति च।
उपालभत इत्येवमुपालम्भार्थवाचकाः ॥ १४० ॥
क्रुध्यति कुप्यति रुष्यति संरभते चेति संरम्भे।
अनुनयने सान्त्वयति प्रसादयत्यनुनयत्यपि च ॥ १४१ ॥
सहते मृष्यति मर्षति मर्षयति मर्षते चैव।
क्षमते तितिक्षते च क्षाम्यति चेति क्षमाविषयाः ॥ १४२ ॥
करुणाकरणे दयतेऽनुकम्पते चेति निर्दिष्टौ।
परितोषे परितुष्यत्यनुगृह्णाति प्रसीदति च ॥ १४३ ॥
उद्यच्छते प्रयततेऽभियुङ्क्ते च व्यवस्यति।
उत्तिष्ठते तथोद्युङ्क्ते इत्युद्यमसमर्थकाः ॥ १४४ ॥
त्रासप्रकाशकेऽर्थे तु त्रस्यत्याशङ्कते तथा।
प्रकम्पते च चकते बिभेति क्षुभ्यतीति च ॥ १४५ ॥
भयजनने कम्पयति त्रासयति क्षोभयत्यपि च।
यदि न स्यात्करणभयं तद्भापयते च भीषयति ॥ १४६ ॥

व्रीडनार्थे तु जिह्रेति लज्जते त्रपते तथा।
हृणीयते व्रीड्यते च व्रीडते विरलं क्वचित् ॥ १४७ ॥
आकर्णयति निशाम्यत्युपवर्णयति च शृणोति निशामयति।
श्रवणेऽनुरञ्जनविधौ पुनरावर्जति रञ्जयति ॥ १४८ ॥
चित्राप्तौ विस्मयते चमत्करोत्यथाद्भुतस्य कृतौ ॥
विस्मापयते चित्रीयते चमत्कारयत्यपि च ॥ १४९ ॥
प्रकटयति व्यञ्जयति च व्यनक्ति च व्यञ्जते प्रकाशयति।
उद्गिरति द्योतयति स्फुटयत्याविष्करोत्यपि च ॥ १५० ॥
स्फुटीकरोति प्रकटीकरोति विवृणोति च।
वृणीते च तथा व्यक्तीकरोतीति प्रकाशने ॥ १५१ ॥
निह्नुतेऽपह्नुते चैव संवृणोत्यावृणोति च।
स्थगयत्यावृणीते च संवृणीते निगूहति ॥ १५२ ॥
अपलपति गोपयत्यपि गोपायत्यपिदधाति पिदधाति।
पिधत्तेऽन्तर्दधाति च तिरोदधाति च व्यवदधात्यपि च ॥ १५३ ॥
निचुलयति निस्तृणाति च स्तृणोति च च्छादयत्यपि च।
अन्तरयति तिरयति चेत्याच्छादनविषयिणः समाख्याताः ॥ १५४ ॥
पूरयति पूर्यते च व्याप्नोति व्यश्नुते पिपर्त्यपि च।
भरते विगाहते चेत्यर्थोऽतिव्याप्तिसम्बन्धे ॥ १५५ ॥
आस्वादयत्यनुभवत्युपजीवति चोपयुङ्क्ते च।
उपभुङ्क्ते निर्विशतीत्युपयोगे योग्यता याताः ॥ १५६ ॥
उपयच्छति च परिणयत्युद्वहति विवहतीति परिणयने।
करोति हस्ते पाणिभ्यां कुरुते चोपयच्छते ॥ १५७ ॥
विवहत्युद्वहति चोद्वाहे परिणयत्यपि।
अ भसरणे त्वभिगच्छत्यभिसरति तथाऽभिसारयति ॥ १५८ ॥
संवाहयति करोतीत्युक्तौ संवाहनेऽथ परिरम्भे।
आलिङ्गत्याश्लिष्यति परिरभते चोपगूहते स्वजते ॥ १५९ ॥
आमृशति परामृशति स्पृशतीति स्पर्शसम्बन्धे।
सुरभीकरणे सुरभीकरोति सुरभयति वासयति ॥ १६० ॥

जागरणे जागर्ति प्रबुध्यते चाप्यनन्तरं स्वापे।
शेते निद्रायति च स्वपिति च निद्रायते च निद्राति ॥ १६१ ॥
निवसति निलीयतेऽपि च तिष्ठति चेतिस्थितावथाध्यास्तौ।
आरोहत्यधिशेतेऽध्यास्तेऽधिवसति तथाऽधितिष्ठति च ॥ १६२ ॥
चलने चलति प्रेङ्खति विकम्पते वेपते च वेल्लति च।
त्वङ्गति रङ्गति वल्गति लोलति च स्पन्दते परिस्फुरति ॥ १६३ ॥
कम्पयति प्रेङ्खयति च लुलयति दोलयति धुवति तरलयति।
धूनोत्यपि च धुनोति च धुनाति धूनयति चेति कम्पकृतौ ॥ १६४ ॥
च्यवते पतयति पतति भ्रश्यति च भ्रंशते तथा क्षरति।
विस्रंसते च विगलति विशीर्यते चेति पतनार्थाः ॥ १६५ ॥
कालक्षेपे चिरयति विलम्बते चाथ निर्गमने।
क्षपयत्यतिवाहयति च निस्तरयति नयति नियमयति ॥ १६६ ॥
निर्वाति विध्यायति चेत्यर्चिर्नाशेऽथ तेमने।
तिम्यति स्ति(स्ता)म्यति स्विद्यत्युनत्ति क्लिद्यतीत्यपि ॥ १६७ ॥
स्रवणव्यञ्जकेऽर्थे तु श्चोतति स्यन्दते तथा।
वमत्यपि क्षरति च स्रवति द्रवतीत्यपि ॥ १६८ ॥
स्नापनविधौ प्रयोज्याः स्नपयत्युक्षति च सिञ्चति च।
नेनेक्ति शोधयति च प्रक्षालयतीति शोधने वाच्याः ॥ १६९ ॥
छुरयति देग्धि च लिम्पत्युद्वर्त्तयतीति लेपनार्थाः स्युः।
कर्बुरयति शबलयति किर्मीरयतीति कर्बुरणे ॥ १७० ॥
द्योतते शोभते भाति भ्राजते च विराजते।
रोचते दीप्यते तद्वद् भासते च प्रकाशते ॥ १७१ ॥
चकास्ति चञ्चति लसत्युल्लसत्यपि शोभते।
विलसत्येवमाद्याः स्युर्भ्राजनार्थप्रकाशकाः ॥ १७२ ॥
चकास्ति भासते भाति रोचते च प्रकाशते।
शोभते भ्राजते राजत्यात्मनेऽप्यत्र दीव्यति ॥ १७३ ॥
नेपथ्यविरचनायां मण्डति भूषत्यलङ्करोत्यपि च।
मण्डयति भूषयत्यपि परिष्करोति प्रसाधयति ॥ १७४ ॥

पावयति पवित्रयति च पवते च पुनाति चेति पवनार्थाः स्युः ।
क्रीडति विहरति-रमते खेलति चेति खेलार्थाः ॥ १७५ ॥
अनुजानात्यनुमनुतेऽनुमन्यते चेत्यनुज्ञायाम् ।
न्यासे न्यस्यति निदधात्यारोपयति च निवेशयति ॥ १७६ ॥
अनुज्ञानेऽनुमनुतेऽनुजानात्यनुमन्यते ।
अत्रैवाभ्यनुजानाति चत्वारो धातवो मताः ॥ १७७ ॥
परिवेष्टने प्रदिष्टा वलयति वेष्टयति परिवृणोत्यपि च ।
संयच्छत्यामुञ्चति नह्यति बध्नाति चेति बन्धार्थाः ॥ १७८ ॥
नमयत्यावर्जयति च नामयतीत्यपि च नामार्थाः ।
व्यावर्त्तते च वलते विवर्तते बलयतीति वलनार्थाः ॥ १७९ ॥
निर्गच्छति निष्क्रामति निरेति निःसरति निर्याति ।
निस्सरणेऽथ प्रहृतौ प्रहरति विध्यति शरव्ययति ॥ १८० ॥
सक्तौ मिलति श्लिष्यत्यासज्जति युज्यते लगति ।
घर्षणविधौ तु घर्षति विलिखत्युल्लिखति कषति घटयति च ॥ १८१ ॥
विरुणद्धि विगृह्णातीत्युक्तौ विग्रहकृतावथारम्भे ।
आरभते प्रस्तौति प्रक्रमते चाप्युपक्रमते ॥ १८२ ॥
आरम्भे तु प्रक्रमते प्रस्तौतीत्यात्मनेऽपि च ।
तथैवारभते चोपक्रमतेऽत्र चतुष्टयम् ॥ १८३ ॥
उपनयति ढौकयत्युपहरतीत्युपहृतौ समाप्तौ तु ।
अवसाययति समापयति निःशेषयति चाप्यशेषयति ॥ १८४ ॥
प्राणधारणे प्रदिष्टाः प्राणित्युच्छ्वसिति जीवति च ।
वायौ प्रवहति वाति व्यजने तु व्यजयति वीजयति ॥ १८५ ॥
विकिरति विक्षिपतीति च विक्षिप्तौ प्रत्यये तु मानयति ।
संभावयति तथैव प्रत्येति श्रद्दधात्यपि च ॥ १८६ ॥
ईर्ष्याधिगतावीर्ष्यत्यसूयतीत्येतयोर्विभेदोऽस्ति ।
पाकप्रकाशकेऽर्थे रन्धयति तथैव सेधयति ॥ १८७ ॥
आप्रच्छने सहाङा मन्त्रयते पृच्छते च सङ्घर्षे ।
प्रतिगर्जति संहृष्यत्याह्वयति स्पर्धते मिषति ॥ १८८ ॥

आहरति चानयति चेत्यानयनार्थौ विनिर्दिष्टौ ।
अवरोहत्यवतरतीत्यवतरणे वाहनादिभ्यः ॥ १८९ ॥
विद्राति विद्रवत्यपि पलायते नश्यतीति विद्रवणे ।
मोहे मुह्यति मूर्च्छति परिचयने परिचिनोति संस्तौति ॥ १९० ॥
विश्रम्भते विश्वसितीत्युक्तौ विश्रम्भवाचकौ ।
ईहते चेष्टते चेति चेष्टायां परिकीर्तितौ ॥ १९१ ॥
विस्रम्भते तु प्रत्येति विश्वसित्याश्वसित्यपि ।
श्रद्धत्ते श्रद्दधातीति विश्वासे षट् क्रिया मताः ॥ १९२ ॥
स्वदते रोचते चेति स्वदनेऽथ प्रतीक्षणे ।
पालयत्यनुना सार्धं प्रतिना च प्रतीक्षते ॥ १९३ ॥
युज्यते घटते चैव सम्भवत्युपपद्यते ।
सम्भवेऽथ चिकित्सायां चिकित्सति भिषज्यते ॥ १९४ ॥
मज्जति ब्रुडतीत्युक्तौ मज्जनेऽथापराधने ।
विराध्नोत्यपराध्नोति विराध्यत्यपराध्यति ॥ १९५ ॥
अनुतापविधौ प्राहुरनुशेतेऽनुतप्यते ।
संनह्यते संनहने तथा संवर्मयत्यपि ॥ १९६ ॥
कथितौ कर्षणविधौ कर्षति कृषतीत्यथो विसंवादे ।
व्यभिचरति विघटतेऽपि च विसंवदत्यपि विपर्येति ॥ १९७ ॥
प्रतिबिम्बे प्रतिफलति स्फुरति सङ्क्रामतीत्यथाहुत्याम् ।
स्वाहाकरोति तद्वद् वषट्करोति च जुहोत्यपि च ॥ १९८ ॥
कथितौ प्रतिक्रियायां प्रतिविदधाति प्रतिकरोत्यपि च ।
योज्याश्च योजनायां युनक्ति योजयति घटयति च ॥ १९९ ॥
कथयति कथनस्यार्थे भिक्षार्थे भिक्षते पुनः ।
क्षुतक्रियायां क्षौतीति कासनार्थे तु कासते ॥ २०० ॥
दोग्धीति दोहनस्यार्थे प्रस्तौति प्रस्तवे पुनः ।
कण्डूयते तु कण्डूयत्याघ्राणार्थे तु जिघ्रति ॥ २०१ ॥
धमति ध्मानवाच्येऽर्थे सज्जनार्थे तु सज्जति ।
परीक्षते परीक्षायां, चुम्बनार्थे तु चुम्बति ॥ २०२ ॥

घूर्णते घूर्णनस्यार्थे शोचनार्थे तु शोचति ।
अनक्तीत्यञ्जने प्राहुरभ्यक्तावभ्यनक्ति च ॥ २०३ ॥
दीव्यति द्यूतखेलायां स्निह्यति स्नेहधारणे ।
त्रुट्यति त्रोटनस्यार्थे निरुञ्छति निरुञ्छने ॥ २०६ ॥
हसतीति हसस्यार्थे स्मयतेऽल्पहसे पुनः ।
जृम्भते जृम्भणस्यार्थे रिषणे रिषतीति च ॥ २०५ ॥
हेषते हेषणेऽश्वस्य बृंहते द्विपबृंहणे ।
तक्ष्णोति तक्षणस्यार्थे शोषणार्थे तु शुष्यति ॥ २०६ ॥
युध्यते योधनस्यार्थे तृप्तिप्राप्तौ तु तृप्यति ।
प्रवेशार्थे प्रविशति प्रतीष्टौ तु प्रतीच्छति ॥ २०७ ।
गानस्यार्थे तु गायत्युपवीणयतीति वीणया गाने ।
व्यापारे व्याप्रियते सन्देशार्थे तु सन्दिशति ॥ २०८ ॥
उड्डयने तूड्डयते परिवेषयतीति परिवेषे ।
विश्रामे विश्राम्यति सभाजयति सभाजनस्यार्थे ॥ २०९ ॥
क्रीणाति स्यात्क्रीतौ विक्रीणीते विक्रयस्यार्थे ।
विभजति विभागकरणे तन्तुग्रथने स्मृतो वयति ॥ २१० ॥
निःश्वासे निःश्वसिति व्ययने तु व्ययति चेति प्राहुः ।
सन्धुक्षणविषयार्थे सन्धुक्षयतीति फलति फलनार्थे ॥ २११ ॥
पुष्पप्रादुर्भावे पुष्प्यति शब्दायते च शब्दकृतौ ।
बाष्पायते बाष्पोद्गमने फेनायते तु फेनकृतौ ॥ २१२ ॥
उत्तिष्ठत्युत्थाने तरणस्यार्थे पुनस्तरति ।
वाचयति वाचनविधौ मृगरमणे रजयतीत्याहुः ॥ २१३ ॥
वपतीत्युप्तिविधाने गजप्रहारे तु परिणमति ।
वैरायते तु वैरप्रवर्तने दशति दशनार्थे ॥ २१४ ॥
लालयति लालनविधौ अभिषेणयतीति सेनया याने ।
कलहायते च कलहप्रवर्तने लेखने लिखति ॥ २१५ ॥
अतिहस्तयतीत्याहुर्हस्तेनातिक्रमे सति ।
उपश्लोकयतीत्याहुः सति श्लोकैरुपस्तवे ॥ २१६ ॥

अर्थे तु लोहितीभावसम्बद्धे लोहितायते ।
ऊष्मायत इति प्राहुरूष्मणोद्गमने सति ॥ २१७ ॥
अवधानेऽवदधाति प्रमाद्यतीत्यनवधाने तु ।
त्वरते पुनस्त्वरायाम् उददास्त इति विदुरुदास्तौ तु ॥ २१८ ॥
समादधात्यवदधात्यपि प्रणिदधाति च ।
आत्मने चावधाने स्युरवधारयतीत्यपि ॥ २१९ ॥
अङ्कुराद्युद्भवे प्रायः प्ररोहति विरोहति ।
निष्पद्यते फलति च सिद्धौ सिध्यति राध्यति ॥ २२० ॥
निर्वर्तते च पञ्चाथ स्थितौ वसति तिष्ठति ।
वर्तते निवसत्यास्ते ध्रियते वावतिष्ठते ॥ २२१ ॥
जीवति श्वसिति प्राणित्यूर्जयत्यपि जीवने ।
स्यात् प्रत्युज्जीवति पदं पुनर्जीवनवाचकम् ॥ २२२ ॥
प्रश्वसित्यत्र निःश्वासे तथा निःश्वसितीत्यपि ।
परिमाणे परिणमत्यात्मनेऽपि विवर्तते ॥ २२३ ॥
सम्पद्यते कल्पते ऽथ वृद्धौ बृंहति वर्धते ।
विपोलत्येधते स्थूलयते पुष्यति चेति षट् ॥ २२४ ॥
स्फुटति स्फोटने फुल्लत्युन्मीलयति पुष्प्यति ।
विजृम्भते विकचते विकासे विकसत्यपि ॥ २२५ ॥
उच्छ्वसित्यपि तद्भेदे द्वयमुद्घटतेऽपि च ।
सङ्कोचे निमिषत्यत्र मुकुलीभवतीति च ॥ २२६ ॥
सङ्कुचत्यपि पञ्च स्युर्मीलत्यपि निमीलति ।
अथो जरायां जरति जीर्यत्यपि जिनात्यपि ॥ २२७ ॥
ह्रस्वत्वे खर्वति ह्रस्वत्यत्र न्यञ्चत्यवाञ्चति ।
निष्कृष्यते त्वनुत्कर्षे हीयते चापकृष्यते ॥ २२८ ॥
कर्मकर्तरि पञ्चापक्षीयते चापचीयते ।
कुञ्चत्यल्पमिवेत्यत्र घटते च विदस्यति ॥ २२९ ॥
दीयते क्षयतीत्येतत् पदाष्टकमपक्षये ।
अवघट्टत इत्येतन् निम्नगादेरपक्षये ॥ २३० ॥

सप्त प्रध्वंसते व्येति विनश्यति विलीयते ।
प्रलीयते विनाशे स्युः प्रणश्यति विपद्यते ॥ २३१ ॥
परैति प्रैति मरणे म्रियते च प्रमीयते ।
सन्तिष्ठते समाप्नोति विरमत्यारमत्यपि ॥ २३२ ॥
पर्यवस्यत्युपरमत्यात्मनेऽपि क्रियाद्वयम् ।
विविधायां क्रियाषट्कं समाप्ताविदमीक्ष्यते ॥ २३३ ॥
निर्वायत्यर्चिषः शान्तौ निर्वात्यप्यत्र शाम्यति ।
स्फूर्तौ सप्ताविरस्त्याविर्भवति प्रादुरस्ति च ॥ २३४ ॥
प्रादुर्भवति निर्माति स्फुरति प्रतिभासते ।
मनसा गोचरीभावे मनस्वित्वे मनस्यति ॥ २३५ ॥
विभ्राम्यति विपर्येति विपर्यस्यति विभ्रमे ।
भ्रमति भ्रम्यतीत्येतौ विमतौ तु विमन्यते ॥ २३६ ॥
क्रियात्रयं विवदते तथा विप्रतिपद्यते ।
सन्दिग्धेऽपि च सन्देग्धि संशेते विचिकित्सति ॥ २३७ ॥
क्रियाचतुष्कं सन्देहे विचारे तु क्रिया दश ।
मीमांसते चर्चयति विन्ते च विमृशत्यपि ॥ २३८ ॥
तथा परामृशति विचारयति चात्मने ।
अन्वीक्षतेऽनुसन्धत्ते स्यात् परस्मैपदेऽप्यसौ ॥ २३९ ॥
इत्यप्युपालोचते द्वौ पर्यालोचत इत्ययम् ।
वितर्कयत्युन्नयति यथोत्प्रेक्षत ऊहते ॥ २४० ॥
उत्पश्यति वितर्केऽथ विविनक्ति विवेचने ।
वेवेक्त्यप्यात्मनेऽप्येतौ स्याद् विवेचयतीत्यपि ॥ २४१ ॥
सङ्कल्पयति सङ्कल्पेऽभिसन्धत्त इति द्वयम् ।
अपध्यायत्यपध्याने दुःसङ्कल्पयतीति च ॥ २४२ ॥
लक्षीकरोत्युद्दिशति स्यादुद्देशे क्रियाद्वयी ।
साक्षात्करोत्यात्मनेऽपि प्रत्यक्षेऽध्यक्षयत्यपि ॥ २४३ ॥
साक्षयत्यपि चाध्यक्षीकरोत्यनुभवत्यपि ।
मिमीते मायते माति मिनोति मिनुते मितौ ॥ २४४ ॥

प्रमानुमोपमासु स्युः क्रमात् प्रानूपपूर्वकाः ।
ध्याने चिन्तयति ध्यायत्यमी भावयति त्रयः ॥ २४५ ॥
प्रत्यभिजानात्यनुसन्धत्ते प्रतिसन्दधात्यपि ।
प्रतिसन्धत्ते प्रत्यवमृशतीमाः प्रत्यभिज्ञाने ॥ २४६ ॥
विस्मृतौ विस्मरति च तथैव प्रस्मरत्यपि ।
मोहे विचेतीभवति विमुह्यति च मूर्च्छति ॥ २४७ ॥
ऋच्छत्यपि प्रमादे तु स्रंसते विमनायते ।
प्रमाद्यतीति विमनीभवतीति चतुष्टयम् ॥ २४८ ॥
निर्वर्णयति निध्यायत्यालोकयति पश्यति ।
निरूपयति सम्पश्यत्यात्मने स्यादकर्मकम् ॥ २४९ ॥
आलोकते लक्षयते निभालयत ईक्षते ।
निचायत्यात्मनेऽपि द्वौ निशामयति चेत्यपि ॥ २५० ॥
लोचते लक्षयति च क्रियाः प्रोक्ता विलोकने ।
शृणोत्याकर्णयति च तद्वन्निशमयत्यपि ॥ २५१ ॥
निशाम्यतीति श्रवणे घ्रातौ जिघ्रति शिङ्घति ।
स्पृशत्यामृशति स्पर्शे छुपत्यालभतेऽपि च ॥ २५२ ॥
आस्वादने रसयति लेढि चास्वादयत्यपि ।
लीढे चेति चतुष्कं स्यात् स्वदनार्थाः प्रकीर्तिताः ॥ २५३ ॥
लोभे त्रयं लुभ्यतीति धनायति च गृध्यति ।
उद्युङ्क्ते च प्रयतते क्रमते च व्यवस्यति ॥ २५४ ॥
उत्सहत्यात्मनेऽपि स्यात् प्रयत्ने पदपञ्चकम् ।
विप्रीयतेऽपरजति द्वेष्टि द्वेषेऽपरज्यति ॥ २५५ ॥
निरुणद्धि विगृह्णाति पञ्चामी चात्मनेपदे ।
वैरायते तु विद्वेष्टि विराध्नोति विरुध्यते ॥ २५६ ॥
विराध्यति च वैरे स्यात्तथा व्युत्तिष्ठतेऽपि च ।
असूयत्यभ्यसूयायाम् ईर्ष्यायामीर्ष्यतीर्क्ष्यति ॥ २५७ ॥
सङ्घर्षति स्पर्धते च स्पर्धायां प्रतिगर्ज्जति ।
मोदते ह्लादते हृष्यत्यानन्दति च तुष्यति ॥ २५८ ॥

प्रीणाति प्रीयते प्रीतौ निर्वृणोत्यात्मनेऽपि च ।
प्रचेतीभवतीत्यत्र प्रमनीभवतीति च ॥ २५९ ॥
सुमनायत इत्येवं सुमनीभवतीत्यपि ।
सुखायते च निर्वातीत्येताः प्रोक्ताश्चतुर्दश ॥ २६० ॥
लज्जते त्रपते मन्दाक्षयत्यपि ह्रणीयते ।
जिह्रेतीति ह्रियां पञ्च बिभेत्युद्विजते भये ॥ २६१ ॥
त्रसति त्रस्यति तथा क्षमायां तु तितिक्षते ।
सहतीत्यात्मनेऽपि स्यात् त्रयं मृष्यति मर्षति ॥ २६२ ॥
क्षाम्यति क्षमते चेति सप्त साहयतीत्यपि ।
अनादरेऽवजानाति तथा परिभवत्यपि ॥ २६३ ॥
एकादशावगणयत्यवधीरयतीति च ।
असत्तिरोभ्यां कुरुते परस्मैपदभागपि ॥ २६४ ॥
तथाऽवमनुते चावमानयत्यवमन्यते ।
विमानयति चात्रावहेलयत्यपि हेडते ॥ २६५ ॥
प्रस्तोभयति तद्भेदे तथा प्रोत्साहयत्यपि ।
दम्भक्रियायां दभ्नोति द्वितयं दम्भयत्यपि ॥ २६६ ॥
जिघांसति द्रुह्यति च द्रोहे व्यापादयत्यपि ।
अपराध्यति राध्नोति रध्यतीत्यपराधने ॥ २६७ ॥
अपकारेऽपकुरुते क्षिणोत्यपकरोति च ।
पञ्च क्रोधे संरभते रुष्यति क्रुध्यतीति च ॥ २६८ ॥
भामते कुप्यतीति स्यादागृह्णात्यात्मनेऽपि च ।
अभिपूर्वं निविशते निर्बध्नात्याग्रहे त्रयम् ॥ २६९ ॥
करुणायां तु दयतेऽनुगृह्णात्यात्मनेऽपि च ।
कृपायते च करुणायते चाप्यनुकम्पते ॥ २७० ॥
अनुक्रोशत्यपि स्युः षट् तद्भेदे तु प्रसीदति ।
शोके तु शोचतीत्येकं विषीदत्यनुतप्यते ॥ २७१ ॥
अनुशेतेऽनुतपति पश्चात्तापे क्रिया मताः ।
निर्विद्यते तु निर्वेदे निर्विण्णीभवतीत्यपि ॥ २७२ ॥

क्रियाद्वयं विलपति विलापे परिदेवते ।
रोदित्यस्त्रयति क्रन्दत्यपि बाष्पायतेऽपि च ॥ २७३ ॥
अनुरज्यत्यनुरजत्यात्मनेऽपि पदद्वयम् ।
प्रीयते स्निह्यति तथा स्नेहे पदचतुष्टयम् ॥ २७४ ॥
गर्वेऽभिमनुते गर्वयते दृप्यति माद्यति ।
अहङ्करोत्यात्मनेऽपि क्षीबते चाभिमन्यते ॥ २७५ ॥
गर्वत्युद्धत्यथोन्मादे लोडत्युन्माद्यतीति च ।
ताम्यति क्लाम्यति ग्लानौ ग्लायति क्लामतीति च ॥ २७६ ॥
मलिनीभवति म्लानौ म्लायत्यपि पदद्वयम् ।
खिद्यते ग्लपते दैन्ये श्राम्यतीति परिश्रमे ॥ २७७ ॥
तथैवायस्यतीत्यत्र प्रयस्यति पदत्रयी ।
क्लिश्यते व्यथते दुःखायते कृच्छ्रायतेऽपि च ॥ २७८ ॥
दूयते चेति दुःखित्वे जुगुप्सायां जुगुप्सते ।
बीभत्सतेऽथ जृम्भायां जृम्भते जम्भतेऽपि च ॥ २७९ ॥
प्रमीलतीति तन्द्रायां घूर्णते प्रचलायते ।
शेते निद्राति निद्रायत्यपि निद्रायतेऽपि च ॥ २८० ॥
तथा संविशति स्वापे स्वपित्यपि च षट् क्रियाः ।
प्रबुध्यते तु जागर्ति जागर्यायां पदद्वयम् ॥ २८१ ॥
प्रबोधने चेतयते प्रबोधयति चेतति ।
हसत्यकर्मकं हासे प्रहासे तु सकर्मकम् ॥ २८२ ॥
स्मयते हसिते मन्दे गर्ह्ये कुस्मयते स्मिते ।
मध्यमे स्याद् विहसति सुप्रौढेऽपहसत्यदः ॥ २८३ ॥
सनिन्दे तूपहसति परिहासे तु भण्डते ।
तथा परिहसत्यत्र विस्मये तु पदद्वयम् ॥ २८४ ॥
विस्मेरीभवतीत्यत्र तथा विस्मयतेऽपि च ।
प्रलापे तु प्रलपति कुत्रचिज्जल्पतीति च ॥ २८५ ॥
आम्रेडयति तु द्विस्त्रिरुक्तौ सञ्जागदीत्यपि ।
अनुवादेऽनुवदतेऽनुवक्तीत्यादयोऽपि च ॥ २८६ ॥

पठत्यधीतेऽध्ययने शिक्षणे शिक्षते त्रयम् ।
अभ्यस्यत्यामनति च पाठने पाठयत्यपि ॥ २८७ ॥
शिक्षयत्यनुशास्तीति चतस्रोऽध्यापयत्यपि ।
वेदमाचष्ट इत्यर्थे वेदापयति सम्मतम् ॥ २८८ ॥
सत्यापयति सत्योक्तावथ मिथ्याभिशंसने ।
आक्षारत्यभिशपत्यभ्याचष्टेऽधिशंसति ॥ २८९ ॥
अपशब्दयति म्लेच्छत्यपभ्रंशयतीत्यपि ।
म्लेच्छयत्यपशब्दे स्युरपभाषत इत्यपि ॥ २९० ॥
शपते त्रयमाक्रोशे शपत्याक्रोशतीत्यपि ।
मिथ्याकारयते त्वेतदन्यथात्वे तु सत्कृते ॥ २९१ ॥
स्खलति भ्रेषते भ्रेषे भ्रेषतीति पदत्रयम् ।
पर्यपाभ्यां वदत्येव कलं कार्पणनिन्दने ॥ २९२ ॥
उपालम्भे प्रतिभिनत्त्युपालभत इत्यपि ।
विक्रोशति तु विक्रोशे फूत्करोत्यात्मनेऽपि च ॥ २९३ ॥
कत्थने कत्थते तत्र श्लाघते शाडतेऽपि च ।
कवते वर्णयति च कवित्वे कवयत्यपि ॥ २९४ ॥
उपश्लोकयतीत्येषा क्रिया श्लोकैरुपस्तुतौ ।
स्यात् प्रत्यभिवदत्याशीर्वादे आशिषयत्यपि ॥ २९५ ॥
समाहरति सङ्क्षेपे संगृह्णाति समस्यति ।
सङ्क्षिपत्यात्मनेऽप्येतास् तद्धूदेऽथ वयत्यपि ॥ २९६ ॥
तथा कूणयते चाथ विस्तारे सप्त कीर्तिताः ।
विस्तृणोति व्यस्यति च विस्तृणात्यातनोति च ॥ २९७ ॥
चतस्र आत्मनेऽप्येताः प्रपञ्चयति पञ्चमी ।
ऊर्यूरर्युररीभ्यश्च करोति कुरुते क्रिया ॥ २९८ ॥
आकारयत्याह्वयति स्यादाह्वाने क्रियाद्वयम् ।
स्यात्संहूतौ संह्वयते स्पर्धयाऽऽह्वयते हवे ॥ २९९ ॥
अनुयुंक्ते प्रश्नयति प्रश्ने ज्ञीप्सति पृच्छति ।
आपृच्छते तु यात्रादौ तथाऽनुज्ञापयत्यपि ॥ ३०० ॥

आभिमुख्येन वचनेऽभिब्रवीत्यभिवक्ति च ।
प्रतिवक्त्युत्तरयति प्रत्याहेत्यादयोऽपि च ॥ ३०१ ॥
विज्ञापयति विज्ञप्तौ निवेदयति च द्वयम् ।
अपह्नुतेऽपजानीते निह्नुतेऽपनयत्यमी ॥ ३०२ ॥
अपह्नवे निराचष्टे प्रत्याचष्टे निरस्यति ।
सम्प्रापोहति च प्रत्यादिशत्यपि परास्यति ॥ ३०३ ॥
अपाकारोत्यात्मनेऽपि व्युदस्यत्यप्यपास्यति ।
प्रत्यासयति क्षेपयति स्यात्परानुदतीति च ॥ ३०४ ॥
निराकरोति च पराकरोति निराकृतौ च ।
लुम्बत्यपनयत्येतद् भेदे व्यपनयत्यपि ॥ ३०५ ॥
उपमन्त्रयते चोपवदते सान्त्वयत्यपि ।
सान्त्वने षट् सामयति तथोपच्छन्दयत्यपि ॥ ३०६ ॥
परस्मै चानुनयतेऽनुलोमयति तद्विदि ।
अनुकूलयतीति द्वे सूचयत्यत्र सूचने ॥ ३०७ ॥
तथा पिशुनयत्येष सूचनार्था बुधैर्मताः ।
रम्भते रेफते शब्दे गवाम् उक्षणस्तु नर्दति ॥ ३०८ ॥
मेघस्य तु स्तनयति तथा रसति गर्जति ।
स्फूर्जत्यशनिनिर्घोषे भीमे घुरति गर्जति ॥ ३०९ ॥
प्रायो मृग-खगादीनां नादे कूजति गुञ्जति ।
वीणादेः क्वणति प्रायः कवते कौति कर्कशे ॥ ३१० ॥
भषते बुक्कयति च बुक्कतीति शुनो ध्वनौ ।
क्नूनाति रेभते वार्के तिरश्चां वाश्यते ध्वनौ ॥ ३११ ॥
कुवते घुरतीत्यार्ते घोरे ध्वाङ्क्षति वाशिते ।
हेषते ह्रेषतेऽश्वानां हस्तिनां बृंहतीति च ॥ ३१२ ॥
बुक्कारयति सिंहानाम् उत्कण्ठास्वन आनुते ।
विष्कूजति च सङ्क्रीडत्येते शकटघोषणे ॥ ३१३ ॥
हिक्कते हिक्कतीति द्वे हिक्कायां क्षौति तु क्षुते ।
कासते कफजे शब्दे सौरते भणतीत्यदः ॥ ३१४ ॥

कौक्षे कर्दत्यपानोत्थे पर्दते शर्धते पदे ।
चीत्करोति क्रकरोति रथकार्मुकयोः क्रमात् ॥ ३१५ ॥
द्वे आत्मनेऽपि भूषादेः शिङ्क्ते गीते तु गायति ।
उपवीणयतीत्येतदुपगाने हि वीणया ॥ ३१६ ॥
उद्घोषत्युत्कटे शब्दे निर्घोषति च ह्रादते ।
उत्पूर्वाः शब्दवाचिन्यः क्रिया उच्चस्वने मताः ॥ ३१७ ॥
प्रतिपूर्वः प्रतिध्वाने युज्यतेऽत्र मनीषिभिः ।
प्रकृत्याऽनुसृतौ चानुबध्नात्युद्घाटयत्यपि ॥ ३१८ ॥
अनुतिष्ठत्याचरति श्रद्धायुक्तेऽनुसृज्यते ।
उत्तिष्ठते तु घटते चेष्टायां सप्त चेष्टते ॥ ३१९ ॥
व्यायच्छते व्याप्रियते प्रवर्त्तंतत इहेहते ।
विडुत्सर्गे तु गुवति हदतेऽथावमेहते ॥ ३२० ॥
मूत्रणे मूत्रयति च प्रस्रवत्यपि च त्रयम् ।
उन्मार्ष्टर्युद्वर्तने चोत्सादयत्युद्वर्तयत्यपि ॥ ३२१ ॥
द्वयं तैलादिभिर्लेपे म्रक्षयत्यभ्यनक्ति च ।
परिधाने परिदधात्यत्र संवस्त्रयत्यपि ॥ ३२२ ॥
आच्छादयति वस्ते च परिधत्ते च पञ्चकम् ।
कटिबन्धे घटयति तथा परिकरोत्यपि ॥ ३२३ ॥
प्रावृत्तौ प्रच्छदयति तथाऽत्र प्रावृणोत्यपि ।
अनुलिम्पति चर्चायामुपदेऽग्ध्यात्मनेऽप्युभे ॥ ३२४ ॥
चर्चयत्यथ भूषादिग्रहणे प्रतिमुञ्चति ।
आमुञ्चत्यात्मनेऽप्येताः पिनह्यत्यपिनह्यति ॥ ३२५ ॥
परिष्करोति भूषायामात्मनेऽलङ्कुरोत्यपि ।
मण्डते मण्डयति च भूषयत्यपि भूषति ॥ ३२६ ॥
प्रसाधयत्यथोत्तंसत्यवतंसेऽवतंसति ।
अनक्ति कज्जलयति वीजने वीजयत्यथ ॥ ३२७ ॥
सुरभीकुरुते धूपयति वासयतीत्यपि ।
नटने नाटयत्यत्र त्रयं नटति नृत्यति ॥ ३२८ ॥

हिलतीति तु हावेऽथ कुमारयति खेलति ।
विहरत्यात्मनेऽप्यत्र तथा क्रीडति दीव्यति ॥ ३२९ ॥
खेलायतीह ललति रमते विलसत्यपि ।
आङोऽनुसम्परिभ्यश्च क्रीडते क्रीडनार्थकाः ॥ ३३० ॥
कूर्दते प्लुतिखेलायाम् अथानुकरणे त्रयम् ।
विडम्बयत्यनुकरोत्यात्मनेऽनुहरत्यपि ॥ ३३१ ॥
भवेत् प्रतिनिधत्ते तु साहृश्येऽत्रानुकल्पते ।
रिङ्गति स्खलतीत्येषा स्खलने स्यात् क्रियाद्वयी ॥ ३३२ ॥
तर्षे तृष्यत्यमी धित्सत्युदन्यति पिपासति ।
पिबत्याचामति धयत्यत्र पाने च पीयते ॥ ३३३ ॥
कठिनद्रव्यसम्बद्धरसपाने तु चूषति ।
सध्वनौ विष्वणत्यत्र तथा चावष्वणत्यपि ॥ ३३४ ॥
निगीर्णौ तु गिलत्यत्र ग्रसते निगिरत्यपि ।
दन्दश्यते दन्दशीति दन्दशत्यत्र गर्हिते ॥ ३३५ ॥
दंशे विशुद्धे दशति तथा दंशयते द्वयम् ।
अपस्मरत्यपस्मारे विरेके तु विरिच्यते ॥ ३३६ ॥
कर्मकर्तर्यसौ तत्र भवेदतिसरत्यपि ।
वान्तौ वमत्युद्गिरति च्छर्दयत्युद्गिलत्यपि ॥ ३३७ ॥
निष्ठीव्यतीति थूत्कारे द्वयं निष्ठीवतीत्यपि ।
तृप्तौ तृप्यति तृप्नोति सुहितीभवतीत्यपि ॥ ३३८ ॥
विश्राम्यतीति विश्रान्तौ क्वचिद् विश्रमते मतम् ।
आस्ते निविशते चोपविशत्यत्र निषीदति ॥ ३३९ ॥
ऊर्ध्वीभवति चोत्तिष्ठत्यूर्ध्वत्वे तिष्ठतीत्यपि ।
अनुक्रामति पर्येति परीयत इति क्रमे ॥ ३४० ॥
आदाने स्वीकरोत्यत्र गृह्णात्यप्यात्मने द्वयम् ।
उपादत्ते गृह्यते लाति षट् स्युः प्रतीच्छति ॥ ३४१ ॥
वर्जने वारयत्यत्र स्यान्निवारयतीति च ।
तथा वृणक्ति वृङ्क्ते च व्यासेधति निषेधति ॥ ३४२ ॥

वर्जयत्यपि सप्तैताः वरणे वरयत्यदः ।
वावृत्यते वृणोतीति वृणातीत्यात्मनेऽप्युभे ॥ ३४३ ॥
आधत्ते च निधत्ते च निदधात्यादधाति च ।
आरोपयत्यर्पयति निश्य( न्यस्य )तीति तथाऽर्पणे ॥ ३४४ ॥
विन्यस्यतीति तद्भेदे संनिवेशयतीत्यपि ।
चत्वारि वात्मने ज्येष्ठेऽनूढे च परिविन्दति ॥ ३४५ ॥
आचोटयत्याचुटति द्वयमेतन्नखक्षते ।
परिष्वजत आश्लिष्यत्यालिङ्गत्युपगूहति ॥ ३४६ ॥
क्रोडीकरोत्यात्मने द्वावङ्कपालयतीति च ।
सप्त स्युः परिरम्भे परिरभतेऽप्यथ रिरंसायाम् ॥ ३४७ ॥
कामयतेऽत्र वृषस्यति रिरंसते चेत्परं योषित् ।
अश्वस्यति तु यद्यश्वा चुम्बने चुम्बतीत्यदः ॥ ३४८ ॥
व्यवैति संविशत्यत्र निधुवत्यपि मैथुने ।
मिथुनीभवतीत्यत्र सम्प्रयुङ्क्ते यभत्यपि ॥ ३४९ ॥
उपभुङ्क्ते तूपभोगे सम्भुक्ते निर्विशत्यपि ।
प्रसूयते प्रसूते च गर्भमोक्षे विजायते ॥ ३५० ॥
प्रजायते जनयति प्रसौतीति षडीरिताः ।
गर्भमोक्षादिसङ्क्लेशे द्वयं कुथ्नाति कुन्थति ॥ ३५१ ॥
शूलत्यामयतीत्यत्र रुजत्यत्र रुजि त्रयम् ।
उल्लाघयति भैषज्ये भिषज्यति चिकित्सति ॥ ३५२ ॥
उपबर्हत्युपदधात्यात्मनेऽप्युपबर्हणे ।
शौचे नेनेक्ति नेनिक्ते प्रक्षालयति धावति ॥ ३५३ ॥
धावते शोधयति च तद्भेदे मार्ष्टि मार्जति ।
अत्रोपसंस्करोतीति चतस्रो मार्जयत्यपि ॥ ३५४ ॥
पावित्र्ये तु पुनातीति पुनीते पवतेऽपि च ।
शुध्यतीति शुचीभावे विशुध्यत्यवदायति ॥ ३५५ ॥
स्नाने तु स्नायति स्नाति ब्रुडने तु निमज्जति ।
ब्रुडत्याप्लवते चात्र स्युश्चतस्रोऽवगाहने ॥ ३५६ ॥

उपस्पृशति चाचामत्युभे आचमनात्मके ।
आभिमुख्यागमेऽभ्येति तथाऽभ्यायाति च द्वयम् ॥ ३५७ ॥
अभ्युत्थानक्रियायां तु स्यादभ्युत्तिष्ठतीत्यदः ।
प्राघुणत्यतिथीभावे तथाऽभ्यागच्छतीत्यपि ॥ ३५८ ॥
अथार्घत्यञ्चति यजत्यपचायति चात्मने ।
चतस्रः पूजयत्यत्र महयत्यर्हयत्यपि ॥ ३५९ ॥
सभाजयत्यर्चयते महत्याराधयत्यपि ।
सपर्ययति चाराध्नोत्याराध्यति तथाऽर्हति ॥ ३६० ॥
मानयत्यपि पूजायाम् आदरे सत्करोति च ।
सम्मन्यते चाद्रियते तथा सम्भावयत्यपि ॥ ३६१ ॥
नीराजने तु निर्मञ्छत्यत्र निराजयत्यपि ।
शुश्रूषते परिचरत्युपास्ते वरिवस्यति ॥ ३६२ ॥
चतस्रः परिचर्यायां लालयत्युपसेवने ।
तथोपसेवते चाथ यजते चोपतिष्ठते ॥ ३६३ ॥
यजत्यपि सुरार्चायामथ विश्रमयत्यपि ।
संवाहयति चात्र द्वे पादाद्यङ्गोपमर्दने ॥ ३६४ ॥
स्वधाकरोत्यात्मने द्वे पितृभ्यो निर्वपत्यपि ।
जुहोति हविषामग्नौ प्रक्षेपे त्रितयं मतम् ॥ ३६५ ॥
स्वाहावौषड्वषड्भ्यश्च करोति कुरुतेऽपि च ।
प्रक्षेपे तु प्रतिवश( स )त्यत्र प्रक्षिप्यतीति च ॥ ३६६ ॥
मिनोतीत्यात्मनेऽपि स्युश्चतस्रः प्रक्षिपत्यपि ।
विक्षिपत्यात्मनेऽपि स्याद् विक्षेपे विक्षरत्यदः ॥ ३६७ ॥
आमन्त्रणे केतयति निमन्त्रयत इत्यपि ।
अत्रामन्त्रयते चाथ तर्पणे धिनुतेऽवति ॥ ३६८ ॥
धिनोति प्रीणयति च पञ्च तर्पयतीत्यपि ।
अनुज्ञायास्तु करणेऽनुजानात्यनुमन्यते ॥ ३६९ ॥
धापयत्यात्मनेऽपि द्वौ धापने पाययत्यमू ।
चूषयत्यादयोऽप्यत्र स्युरथो परिवेषणे ॥ ३७० ॥

द्वयं यामयतीत्यत्र परिवेवेष्टि चात्मने ।
पिपर्ति पूरयति च पारयत्यपि पूरणे ॥ ३७१ ॥
अत्राप्याययति प्राति प्रीणातीत्यथ तोषणे ।
सुखाकरोति सुखयत्याह्लादयति चेत्यपि ॥ ३७२ ॥
धिनोत्यानन्दयति च मृडयत्यादयस्तथा ।
इज्यारम्भे दीक्षते च जपतीति त्रिधा जपे ॥ ३७३ ॥
जञ्जप्यते जपे निन्द्ये सञ्जपत्यत्र शोभने ।
उपाकरोत्यात्मनेऽपि संस्काराद्ये श्रुतेर्ग्रहे ॥ ३७४ ॥
अभुक्तौ तूपवसति लङ्घते व्रतयत्यपि ।
तप्यते तु तपस्यायां तपस्यत्यप्युभे क्रिये ॥ ३७५ ॥
करोति कुरुते मौण्ड्ये भद्राभद्रपुरःसरे ।
मुण्डयत्यत्र वपति तथा मुण्डयतेऽपि च ॥ ३७६ ॥
उपेक्षते तथोदास्ते पदे माध्यस्थ्यवाचिनी ।
स्युर्विरज्यत्युपरमत्यात्मने विरजत्यमू ॥ ३७७ ॥
उपशाम्यति वैराग्ये तथा निर्विद्यतेऽपि च ।
मुमुक्षते मुमुक्षायाम् अमृतीयति मोक्षते ॥ ३७८ ॥
प्रत्यञ्चति समाधत्ते निर्विकल्पीभवत्यपि ।
परिव्रजति संन्यासे संन्यस्यत्यात्मनेऽप्यदः ॥ ३७९ ॥
ब्रह्मीभवति कैवल्ये निर्वातीति चतुष्टयम् ।
प्रतिष्ठाप्तौ तु विख्याति प्रख्याति प्रतितिष्ठति ॥ ३८० ॥
रक्षणे त्रायते पाति गोपायति भुनक्ति च ।
पिपर्ति रक्षति तथा पालयत्यवतीति च ॥ ३८१ ॥
शास्ति शिष्टौ शिक्षयति दण्डे दण्डयतीत्यदः ।
दाम्यत्यथ वशीकारे धारयत्यात्मनेऽपि च ॥ ३८२ ॥
तथा वशीकरोतीति सङ्गृह्णाति च पूर्ववत् ।
प्रपद्यते तु शरणागतौ शरणयत्यपि ॥ ३८३ ॥
परिक्रीणीत इत्येतदुत्कोचादिवशीकृतौ ।
आपत्तौ स्यादापतते वशीभवति च द्वयम् ॥ ३८४ ॥

स्थिरीकृतौ स्थापयति तथा द्रढयतीत्यपि ।
धारणार्थे धारयति दधाति च बिभर्ति च ॥ ३८५ ॥
द्वे आत्मने च दधते धरतीति च पञ्चकम् ।
नियुङ्क्ते आज्ञापयति निदिशत्यादिशत्यपि ॥ ३८६ ॥
द्वावात्मनेऽपि चाज्ञायाम् अथ प्रस्थापयत्यपि ।
प्रेषणे प्रेषयति च प्रेष्यति प्रहिणोति च ॥ ३८७ ॥
सन्देशे वाचिकयते सन्दिशत्यात्मनेऽपि च ।
लिखत्यक्षरविन्यासे तथा लिपयति द्वयम् ॥ ३८८ ॥
उद्ग्रालयत उद्देशकृता उद्देशयत्यपि ।
प्रेरणे प्रेरयत्यत्र क्षिपतीत्यात्मनेऽपि च ॥ ३८९ ॥
कालयत्यस्यति तथा नुदतीति च पञ्चकम् ।
सेवतेऽनुसरत्यत्र भजति श्रयतीति च ॥ ३९० ॥
आत्मनेऽनुरुणद्धीति तिस्र एवानुवर्तते ।
अनुजीवति सेवायां जुषतेऽनुचरत्यपि ॥ ३३९ ॥
वृणीत इति सम्भक्तौ वलतीत्यात्मनेऽपि च ।
सजूःकरोत्यात्मनेऽपि सह्ये सत्राकरोति च ॥ ३९२ ॥
प्रापणे लम्भयत्यत्र हरत्यपि नयत्यपि ।
वहतीत्यात्मनेऽप्येताः प्रापयत्यापयत्यपि ॥ ३९३ ॥
ये ण्यन्ता गमनार्थास्ते धातवो णीञ्समार्थकाः ।
विलम्बते कुण्ठति च व्याक्षिपत्यात्मनेऽपि च ॥ ३९४ ॥
मन्दायति चिरयति विलम्बेऽथ प्रतीक्षते ।
अनुपालयतीत्यत्र प्रतिपालयतीति च ॥ ३९५ ॥
प्रतीहारयति द्वारप्रवेशनविधौ क्रिया ।
सम्भ्राम्यति त्वरायां स्यात् त्वरते सम्भ्रमत्यपि ॥ ३९६ ॥
अस्यामाविजते चाथ वैक्लव्ये विक्लवत्यपि ।
विह्वलत्यत्र टलति क्लैब्ये तु क्लीबते क्रिया ॥ ३९७ ॥
क्लीबायतेऽथ कौटिल्ये वङ्कते कुटतीत्यपि ।
भुजति न्युब्जति तथा कुञ्चतीति समार्थकम् ॥ ३९८ ॥

गुप्तवादे मन्त्रयते भेदे तूपजपत्यदः ।
दम्भेच्छायां धीप्सतीति दिदम्भिषति धिप्सति ॥ ३९९ ॥
संवर्मयति सन्नह्यत्यत्र सन्नह्यतेऽपि च ।
सज्जयत्यपि सन्नाहे तथा दंशयतेऽप्यदः ॥ ४०० ॥
अधिशेतेऽधिशयनेऽध्यासने त्वधितिष्ठति ।
अध्यास्तेऽथाधिवसतीत्यधिवासे सकर्मकाः ॥ ४०१ ॥
षडमी स्युः अथारोहे आरोहत्यधिरोहति ।
स्फुरति स्पन्दते स्पन्दे चलने तु चतुष्टयम् ॥ ४०२ ॥
चलति प्रेङ्खति तथा घट्टते वेल्लतीति च ।
उत्सेधति तथोन्नह्यात्युच्छ्रयत्यात्मने द्वयम् ॥ ४०३ ॥
क्षोभते क्षुभ्यति क्षोभे गमनेऽञ्चति गच्छति ।
प्रतिष्ठते जिहीते च सरति व्रजतीयते ॥ ४०४ ॥
पद्यते याति चरति सर्पत्ययति चञ्चति ।
ऋच्छति प्रयते गाते चलत्येति च टीकते ॥ ४०५ ॥
अयते क्रामतीर्यति क्रिया द्वाविंशतिर्मताः ।
निर्गच्छति तु निर्याति निष्क्रामति निरेति च ॥ ४०६ ॥
प्रायो निःसरणार्थाः स्युर्निःपूर्वा गमनार्थकाः ।
तदा त्वागमनार्थाः स्युर्यद्याङ्पूर्वा भवन्त्यमी ॥ ४०७ ॥
स्यात् प्रत्यावर्तते प्रत्यायाति व्याघोटतेऽपि च ।
प्रत्याङ्पुरःसराः प्रत्यावृत्तौ स्युर्गमनार्थकाः ॥ ४०८ ॥
अनुपूर्वास्त एव स्युः सर्वेऽनुगमनार्थकाः ।
अटति स्यान्मृदुगतौ रिङ्गतीङ्गति च त्रयम् ॥ ४०९ ॥
त्सरति च्छद्मगमने तथा ढौकत इत्यपि ।
लङ्घते तु प्लुप्तगतौ लङ्घत्युत्फलतीति च ॥ ४१० ॥
भेदे प्लुतगतेरेव वल्गति प्लवते द्वयम् ।
उड्डीयते तूड्डयते खगतावुत्पतत्यपि ॥ ४११ ॥
धावति द्रवति क्षिप्रगमने जवतीत्यपि ।
अटाट्यते चङ्क्रमीति द्वयं भ्रमणिकाविधौ ॥ ४१२ ॥

तद्भेदे भ्रमति भ्राम्यत्यपि पर्यटतीति च ।
बम्भ्रमीति तदाधिक्ये घूर्णते घूर्णतीति च ॥ ४१३ ॥
चङ्क्रूर्यते जङ्गमीति पनीपद्यत इत्यपि ।
यङन्ता यङ्लुगन्ताश्च गत्यर्थाः कुटिले गमे ॥ ४१४ ॥
वलते परिवृत्तौ स्याद् घोटते परिवर्तते ।
अग्रे पुरति नीचैस्तु फक्कत्यतति सन्तते ॥ ४१५ ॥
कुत्सिते द्राति विकले द्वयं खञ्जति खोडति ।
प्रवते वाति वातस्य वहति प्रवहत्यपाम् ॥ ४१६ ॥
घोरत्युत्तमवाहादेः वत्सस्याटीकते क्रमे ।
उद्गच्छत्युदये षट् स्युरुज्जिहीत उदीयते ॥ ४१७ ॥
उदञ्चत्युदयत्येतावात्मने द्वावुदेति च ।
गत्यर्थाः प्रायः उत्पूर्वा उदयस्याभिधायकाः ॥ ४१८ ॥
उन्मीलत्युन्नमति च मेघाद्यभ्युद्गमे द्वयम् ।
आक्रम्यते चाक्रमते ज्योतिःकर्तृक उद्गमे ॥ ४१९ ॥
स्त्यायतीति प्रसरति प्रसारे विसरत्यपि ।
सञ्चारे सञ्चरत्येतत् तृतीयायुक्तमात्मने ॥ ४२० ॥
स्रंसतेऽधोगतौ भ्रश्यत्यपि भ्रंशत इत्यपि ।
पतत्यपि द्रवादेस्तु क्षरति च्यवते तथा ॥ ४२१ ॥
स्कन्दति श्च्योतति तथा स्रवत्यपि गलत्यपि ।
रीयते स्पन्दते चात्र श्चोततीति क्रिया नव ॥ ४२२ ॥
विलीयते द्रवति च कठोरक्षरणे द्वयम् ।
अस्तंगमेऽस्तमयते निम्लोचत्यस्तमेति च ॥ ४२३ ॥
अन्तर्द्धाने तिरोऽन्तर्भ्यामुभे धत्ते दधाति च ।
अपक्रामत्यपैतीति नश्यत्यपि पलायते ॥ ४२४ ॥
प्रायोऽपपूर्वा गत्यर्था अपयाने प्रकीर्तिताः ।
पराङ्मुखत्वे तु परावर्तते च पराञ्चति ॥ ४२५ ॥
निष्कासने तु निष्क्रामत्यवकर्षति चात्र हि ।
निष्कालयति निःसारयति चेत्यादयः क्रियाः ॥ ४२६ ॥

प्रवासे तु प्रवसति तथा विवसतीत्यपि ।
रणेऽभिक्रमते शत्रून् प्रत्यभीतिमतो गतौ ॥ ४२७ ॥
अभियोगेऽभ्यवस्कन्दत्यभियुङ्क्त इति द्वयम् ।
सेनया त्वभियाने स्यादभिषेणयतीत्यदः ॥ ४२८ ॥
सन्निकर्षति तु प्रत्यासीदत्यासीदतीत्यपि ।
परस्मै सन्निकृषते सन्निधत्ते च सन्निधौ ॥ ४२९ ॥
प्राप्तौ प्राप्नोति लभते विन्दतेऽनुरुणद्धि च ।
अनुरुन्धे भावयते विन्दत्यासादयत्यपि ॥ ४३० ॥
व्याप्नोति व्यश्नुते व्याप्तौ वेवेष्टीत्यात्मनेऽपि च ।
पर्याप्नोति तु शक्नोति क्षमते प्रभवत्यपि ॥ ४३१ ॥
कल्पते पारयति च सामर्थ्येऽत्र पदानि षट् ।
उद्यमे चावगुरते उद्गूरयत इत्यपि ॥ ४३२ ॥
उद्यच्छति तथोद्युङ्क्ते स्युः पञ्चोद्यच्छतेऽपि च ।
वेष्टने वेष्टत इति परिक्षिपति चात्मने । ४३३ ॥
परिश्रयति चेति द्वे वेष्टयत्यादयोऽपि च ।
निरुणद्धि निगृह्णात्यात्मने च द्वौ निरोधने ॥ ४३४ ॥
जयत्याक्रामति तथा धर्षयत्यपि घर्षति ।
विलङ्घयत्यभिभवत्यपि च न्यक्करोति च ॥ ४३५ ॥
तथा विजयते चास्कन्दतीत्यभिभवे नव ।
विशेषयत्यतिशये विशिनष्टि प्रकर्षति ॥ ४३६ ॥
विशेषत्यतिशेते च तथोत्कर्षयतीति च ।
उत्कृष्यते द्वयं कर्मकर्तर्यत्रातिरिच्यते ॥ ४३७ ॥
विस्मापयति विस्मेरयति चित्रीयतेऽद्भुते ।
धूनने कम्पयत्यत्र तथा वेपयतीति च ॥ ४३८ ॥
त्रयं धुनोति धूनोति धुनातीत्यात्मनेऽपि च ।
धुवत्येवं धूनयति चलयत्यपि चाष्टकम् ॥ ४३९ ॥
आन्दोलयति तद्वद्दे तथा प्रेङ्खोलयत्यपि ।
( तथा ) दोलयति ( च ) प्रेङ्खयति हिन्दोलयत्यपि ॥ ४४० ॥

आविध्यति भ्रमयति विघूर्णयति च त्रयम् ।
विलोडयति मथ्नाति गाहते मन्थतीति च ॥ ४४१ ॥
त्रासने त्रासयत्यत्र भाययत्यपि खेटति ।
प्रयोजकाद् भये भीषयते भापयते च वा ॥ ४४२ ॥
तथा कुहयते विस्मापयते चेति तद्विदि ।
कम्पे तु कम्पते त्वङ्गत्येजतेऽत्र च वेपते ॥ ४४३ ॥
लोलतीति क्रियाः षट् स्युः परिप्लवत इत्यपि ।
प्रस्विन्नीभवति स्वेदे तथा प्रस्विद्यतीति च ॥ ४४४ ॥
आहन्ति ताडयति च ताडने जासयत्यपि ।
प्रहरत्यात्मने चाथ तद्भेदे कुट्टयत्यपि ॥ ४४५ ॥
आस्फालयत्यर्दयति तथैवाघट्टयत्यपि ।
विध्यति च्छिद्रयत्यत्र वेधे भेदयति त्रयम् ॥ ४४६ ॥
आहतेऽकर्मकत्वे स्यात् स्वकीयाङ्गे च कर्मणि ।
युध्यते सम्प्रहरते सङ्ग्रामयत इत्यपि ॥ ४४७ ॥
विगृह्णाति विगृह्णीते समरे कलहायते ।
निध्वानयति शङ्खादेर्ध्वानेऽत्र धमयत्यपि ॥ ४४८ ॥
वीणादेर्वादयत्यत्र तथा वादयतेऽपि च ।
क्वणयत्यत्र रणयत्यपि प्रक्वाणयत्यपि ॥ ४४९ ॥
क्ष्वेडते सिंहवन्नादे बाहुयुद्धे नियुध्यते ।
पराक्रमे वीरयते पराक्रमत इत्यपि ॥ ४५० ॥
ओजायते शूरयते तथा विक्रमतेऽपि च ।
प्रगल्भते प्रगल्भत्वे तत्र चोर्जस्वलायते ॥ ४५१ ॥
अरुष्करोत्यात्मनेऽपि व्रणयत्यङ्गचूर्णने ।
गोकर्तृकायां हिंसायां प्रस्तुम्पति सुडागमात् ॥ ४५२ ॥
पीडने तु व्यथयति क्लिश्नाति च दुनोति च ।
तपते ग्लापयत्यत्र बाधते पीडयत्यपि ॥ ४५३ ॥
धूपायति ग्लपयति तुदति क्लेशयत्यपि ।
दुःखाकरोत्यात्मनेऽपि तुदते खेदयत्यपि ॥ ४५४ ॥

दुःखयत्युत्कलमयति स्यात् कदर्थयतीत्यपि ।
भनक्ति त्रोटयति च रुजत्यामर्दयत्यपि ॥ ४५५ ॥
भञ्जयत्यथ तद्भेदे मोटयत्यपि मोटति ।
मर्दयत्यत्र मुटति माथयत्यथ पेषणे ॥ ४५६ ॥
क्षुणत्ति म्रदते क्षुन्ते मृद्नाति च पिनष्टि च ।
सञ्चूर्णयत्यथ ध्वंसयति क्षपयतीत्यपि ॥ ४५७ ॥
नाशने नाशयति च तिस्रोऽथोन्मूलने क्रियाः ।
उन्मूलयत्युत्खनति तथोज्जटयतीति च ॥ ४५८ ॥
उत्पाटयत्युत्खनते षडुद्धरति चात्मने ।
उल्लुञ्चतीति केशादेरुत्पाटनविधौ क्रियाः ॥ ४५९ ॥
द्विधाकृतौ पाटयति फालयत्यंशुकादिनः ।
निष्पीडयति निश्च्योतयति निर्गालयत्यपि ॥ ४६० ॥
वैरशुद्धौ प्रतिकरोत्यत्र निर्यातयत्यपि ।
भङ्क्ते प्रसभयत्यत्र पराजयत इत्यपि ॥ ४६१ ॥
जयत्युत्कर्षसम्प्राप्तौ द्वयं विजयतेऽपि च ।
कर्षणे तु कृषत्यत्र कृषते कर्षतेऽपि च ॥ ४६२ ॥
रदत्येवं विलिखति खनत्यपि हलत्यपि ।
बीजाकरोत्युप्तकृतौ स्याद् द्वितीयाकरोत्यपि ॥ ४६३ ॥
शम्बाकरोति द्विगुणाकरोति द्विःकृषौ त्रयम् ।
तृतीयात्रिगुणाभ्यां च करोति त्रिःकृषौ मतम् ॥ ४६४ ॥
आख्यातानि खनत्यादीन्यूहनीयानि चात्मने ।
आलोडयति सङ्ग्राहे तथा सङ्ग्राहतेऽपि च ॥ ४६५ ॥
हलिग्रहे हलयति हलिरुक्तौ महद्धलम् ।
वपत्युप्तौ प्रकिरति वपतेऽप्यथ रोपणे ॥ ४६६ ॥
मूलयत्यपि संरोहयति संरोपयत्यपि ।
स्थिरतायां ध्रुवत्यत्र मूलति प्रतितिष्ठति ॥ ४६७ ॥
शोषे तु शुष्यति तथा शुण्ठत्याश्यायतेऽपि च ।
वायतीति च सेके तु सिञ्चत्यार्द्रीकरोति च ॥ ४६८ ॥

आत्मनेऽपि द्वये वर्षत्यार्द्रयत्यपि शीकते ।
उनत्ति क्लेदयति च क्नोपयत्युक्षतीति च ॥ ४६९ ॥
आर्द्रीभवत्यार्द्रभावे क्लिद्यति स्तिम्यतीति च ।
वर्धने वर्धयत्यत्र बृंहयत्येधयत्यपि ॥ ४७० ॥
सञ्चये संबिभर्तीति सञ्चिनोत्यात्मने त्रयम् ।
तथैवोपचिनोत्यत्र सम्भाण्डयत इत्यपि ॥ ४७१ ॥
राशीकारे पुञ्जयति कूटयत्यत्र युग्मकम् ।
उच्चिनोति शिलत्युञ्छे त्रयमुञ्छयतीत्यपि ॥ ४७२ ॥
अवहन्तीति वै तुष्यकरणे कण्डयत्यपि ।
फलीकरोति वितुषीकरोतीत्यात्मने द्वयम् ॥ ४७३ ॥
पुरापुनात्यात्मनेऽपि प्रस्फोटयति तत्समाः ।
मिमीते मायते माने तथा मातीत्यकर्मकम् ॥ ४७४ ॥
तोलयत्यत्र हेमादिमाने तुलयतीत्यपि ।
पणते दीव्यति तथाऽऽत्मनेऽप्यवहरत्यदः ॥ ४७५ ॥
व्यवहारेऽपमयते परिवर्तयतीत्यपि ।
विक्रीणीते नियमतेऽवक्रीणीते च विक्रये ॥ ४७६ ॥
सत्याकरोत्यात्मनेऽपि तुल्ये सत्यापयत्यपि ।
क्रीणीते विनिमयते क्रीणातीति क्रये तिस्रः ॥ ४७७ ॥
स्यान्नैपुण्ये निपुणति निष्णाति च दक्षते चात्र ।
अर्जनेऽर्जत्यर्जयति गणने गणयत्यपि ॥ ४७८ ॥
कलयत्यपि सङ्ख्याति गुणने गुणयत्यपि ।
आहन्तीति द्वयं प्रोञ्छे प्रोञ्छत्युत्सारयत्यपि ॥ ४७९ ॥
तद्भेदे लुम्पते लुम्पत्यत्र मार्जति च त्रयम् ।
विभागे वण्टयत्यत्र विभजत्यात्मनेऽप्यदः ॥ ४८० ॥
विभाजयत्यंशयति वण्टयत्यपि च पञ्चकम् ।
तिरस्करोत्यपिदधात्यत्र व्यवदधात्यपि ॥ ४८१ ॥
पिदधात्यावृणोतीति संवृणोति स्तृणोति च ।
स्तृणातीत्यात्मनेऽप्यष्टौ तथा सङ्गोपयत्यपि ॥ ४८२ ॥

अपवारयति च्छादयति स्थगयतीत्यपि ।
तिरयत्यावृतौ चाथ निक्षेपे निक्षिपत्यपि ॥ ४८३ ॥
निक्षिपत्यात्मनेऽपि द्वौ तथोपनिदधाति च ।
न्यस्यति प्रतिदत्तेऽथ निष्क्रयीकुरुते तथा ॥ ४८४ ॥
स्यात् प्रत्युपकरोत्यत्र निर्ऋणीभवतीति च ।
प्रत्यर्पयति तु न्यासार्पणे निर्यातयत्यपि ॥ ४८५ ॥
अपेक्षतेऽभ्यर्थयते वनुतेऽर्दति नाथति ।
याच्ञायां भिक्षते मार्गयते याचति याचते ॥ ४८६ ॥
मार्गत्यन्विच्छति गवेषयत्यन्विष्यतीति च ।
अन्वेषते मार्गयति विचिनोत्यात्मनेऽप्यदः ॥ ४८७ ॥
अन्वेषणे मृगयते मृग्यतीति नव क्रियाः ।
दोहानुकूल्ये दुग्धे गौः प्रस्नुते च स्वयं स्रवे ॥ ४८८ ॥
दोग्धि दुग्धे त्रयमिदं प्रपूरयति पूरणे ।
स्नवे तु स्नौत्यथो यौति विप्रयुङ्क्ते वियौति च ॥ ४८९ ॥
वियोजयति विश्लेषयति चात्र वियोजने ।
वियुज्यते विघटते तथा विश्लिष्यतीति च ॥ ४९० ॥
विच्छिद्यते द्वयं कर्मकर्तरि व्यतिरिच्यते ।
मिश्रणे मिश्रयत्यत्र तथा संयोजयत्यपि ॥ ४९१ ॥
कषयत्यत्र सम्मेलयति च्छुरयतीत्यपि ।
संयुनक्ति च सप्तात्र क्रियाः सङ्घट्टयत्यपि ॥ ४९२ ॥
संयुज्यतेऽतिसंयौति सम्पृणक्त्यात्मनेऽपि च ।
सम्भिद्यते कर्मकर्तर्यत्र संसृज्यतीत्यदः ॥ ४९३ ॥
सम्बध्नाति मिलत्यत्र सङ्गच्छति च सङ्गतौ ।
विना कर्मातमने चात्र तथा सन्निपतत्यपि ॥ ४९४ ॥
उपसीदत्युपनमत्यत्र स्यादुपकण्ठते ।
तद्भेदे समवैतीति सचते चासजत्यपि ॥ ४९५ ॥
व्यतिषज्यत इत्येतत् पदं स्यात् कर्मकर्तरि ।
उत्फणत्युच्छलति च तथोद्रिच्यत इत्यपि ॥ ४९६ ॥

उत्सिच्यते तथोत्सेके द्वितयं कर्मकर्तरि ।
उत्क्षेपणे तूत्नयति तथोत्क्षिपति चात्मने ॥ ४९७ ॥
उदस्यत्युद्धरति च चत्वार्युत्तम्भयत्यपि ।
आनीतावानयत्येतदाहरत्यपि चात्मने ॥ ४९८ ॥
सम्मार्जयति सम्मार्ष्टि तथा परिसमूहति ।
आत्मनेऽपि च सम्मार्गे उपदेग्ध्युपलिम्पति ॥ ४९९ ॥
आत्मनेऽपि पदद्वन्द्वं गोमयत्युपलेपने ।
सन्दीपने ज्वलयति तथा सन्दीपयत्यपि ॥ ५०० ॥
उद्द्योतयति सन्धुक्षयति च ज्वालयत्यपि ।
पाके तु रन्धयत्यत्र पचतीत्यात्मनेऽप्युभे ॥ ५०१ ॥
अधिश्रयति च श्राति श्रपयत्यपि रध्यति ।
रध्यते पच्यते कर्मकर्तृकेऽत्र च राध्यति ॥ ५०२ ॥
भर्जते पाकभेदे स्यात् त्रयं भृज्जति भृज्जते ।
शूलाकरोत्यात्मनेऽपि शूलपाके पदं मतम् ॥ ५०३ ॥
द्रवीकृतौ लीनयति लयति द्रावयत्यपि ।
लालयत्यपि वा लालयति लापयतीत्यपि ॥ ५०४ ॥
सन्दधात्यात्मने चाभिषुणोत्यभिषवे द्वयम् ।
स्वदते रोचते रुच्यां संस्कृतौ संस्करोत्यदः ॥ ५०५ ॥
आत्मने प्रतियत्ने तु स्यादुपस्कुरुते पदम् ।
आत्मने वयति व्यूतावूयतेऽथ विषीव्यति ॥ ५०६ ॥
तथा निषीव्यति स्यूतौ परिषीव्यति सीव्यति ।
तक्षति श्यति तक्ष्णोति कृष्यति हसयत्यपि ॥ ५०७ ॥
तक्षणे त्वक्षति तथा परिवासयतीत्यपि ।
उल्लेख उल्लिखत्येकम् उत्कीर्णौ तूत्किरत्यदः ॥ ५०८ ॥
संक्ष्णुते तीक्ष्णकरणे क्ष्णौति चोत्तेजयत्यपि ।
निशिनोति निशीशांसत्यात्मनेऽपि पदद्वयम् ॥ ५०९ ॥
छेदने कृन्तति च्छिन्त्ते चिछनत्ति च्छेदयत्यपि ।
छ्यति वर्धयतीत्यत्र वृश्चतीत्यथ तद्भिदि ॥ ५१० ॥

चोटयत्यत्र चुटति च्छुटति च्छोटयत्यपि ।
प्रायो लुनीते धान्यादेश्छेदे दाति लुनाति च ॥ ५११ ॥
त्रुटति त्रुट्यति च्छेदे च्छिद्यते कर्मकर्तृके ।
भिन्ते विदारयति च भिनत्ति च विदारणे ॥ ५१२ ॥
आखण्डयत्यपि स्फोटयति भेदयति द्यति ।
परीक्षते निकषते शुद्धत्वादिविनिर्णये ॥ ५१३ ॥
प्लोषति प्लुष्यति दहत्योषति ज्वलयत्यपि ।
मुष्णाति चोरयत्यत्र लुण्टयत्यपि मोषणे ॥ ५१४ ॥
आत्मने चापि हरति म्लोचत्यत्र च लुण्टति ।
उल्लुण्ठत्याच्छिनत्तीति द्वयमेतद् बलाद् धृतौ ॥ ५१५ ॥
प्रसहत्यात्मनेऽप्यत्र हठतीति बलात्कृतौ ।
निष्कुष्णाति तु निष्कर्षे तथा निष्कर्षतीत्यपि ॥ ५१६ ॥
स्यान्निष्कुलाकरोत्येतदात्मनेऽत्र तु सव्यथे ।
द्वे निष्पत्रासपत्राभ्यां करोति कुरुते पदे ॥ ५१७ ॥
लक्षयत्यङ्कयत्यत्र लाञ्छतीति च लक्षणे ।
सन्दानयति बध्नाति तथा सन्द्यति कीलति ॥ ५१८ ॥
नह्यतीत्यात्मने त्रीणि संयच्छति शिनोति च ।
पाशयत्यथ बन्धेऽथ विपाशयति मोचने ॥ ५१९ ॥
विमोचयत्यथ स्तम्भे स्तम्भति स्कम्भते तथा ।
अथ स्तब्धकृतौ स्तुम्भयति स्कम्भयतीत्यपि ॥ ५२० ॥
प्रतिबध्नाति च तथा विघ्ने प्रत्यर्थयत्यदः ।
तथा विहन्त्यन्तरेति प्रत्यूहत्यात्मनेऽपि च ॥ ५२१ ॥
विघ्नयत्यन्तरयति प्रत्यवैति तु दुष्यति ।
दुष्करोत्यघयत्यत्र दुष्कृते पङ्कयत्यपि ॥ ५२२ ॥
सन्ततौ सन्तनोतीति तथा सन्तनुतेऽपि च ।
अत्र सन्त्रायते सन्तानयतीति चतुष्टयम् ॥ ५२३ ॥
प्रभाति व्युच्छति व्युष्टे प्रत्यूषति विभाति च ।
अवदायति शुक्लत्वे श्वेतते च क्रियाद्वयम् ॥ ५२४ ॥

रज्यति त्रीणि रजति लोहितायति चात्मने ।
शोणतीति च रक्तिम्नि हरित्वे हरितायति ॥ ५२५ ॥
नीलायते नीलति च तथा श्यामायते पदम् ।
वृष्टिरोधेऽवगृह्णाति तथाऽवस्कन्दति द्वयम् ॥ ५२६ ॥
सूर्येन्दुग्रहणे तूपप्लवते चोपरज्यति ।
उत्कोचयति तूत्कोचे दरिद्राति तु दुर्गतौ ॥ ५२७ ॥
व्यभिचारे व्यभिचरत्यन्यथाभवतीत्यपि ।
दूरीकृतौ दवयति विप्रकर्षयतीत्यपि ॥ ५२८ ॥
द्राघयत्यायमयति स्याद् दीर्घीकरणे द्वयम् ।
उद्वासे तूद्वसत्यत्र तथोच्छन्नीभवत्यपि ॥ ५२९ ॥
उत्सीदत्युज्जटति च शेषे तु परिशिष्यते ।
अत्रावशिष्यत इति द्वितयं कर्मकर्तरि ॥ ५३० ॥
शेषे परिशिनष्टीति द्वितयं शेषयत्यपि ।
सङ्घाते पिण्डयत्यत्र स्त्यायत्यपि समूहति ॥ ५३१ ॥
कण्डूयति तु कण्डूतौ घृष्टौ कर्षति घर्षति ।
उपसंहरतीति स्यात् तथा निगमयत्यपि ॥ ५३२ ॥
सकर्मकोऽप्यकर्मा स्याद् विवक्षा चेन्न कर्मणः ।
क्वाप्यकर्मापि कर्माढ्यो भावनायां भवेदिह ॥ ५३३ ॥
अतः स्यान्नातिनैयत्यमकर्मकसकर्मणोः ।
धातवोऽथापि लिख्यन्ते प्रायो ये स्युरकर्मकाः ॥ ५३४ ॥
सत्तायामुदये स्नेहे मोहस्नानविशुद्धिषु ।
शयनाशनलज्जासु जीवने मरणे क्रुधि ॥ ५३५ ॥
त्वरायां क्रीडने नृत्ये रोदनस्थितिदीप्तिषु ।
भये स्पन्दे च सन्देहे रोषस्पर्धाक्षयेष्वपि ॥ ५३६ ॥
मदोद्वेगप्रकम्पेषु व्यथाजागरवृद्धिषु ।
जरायां स्वेदनोत्पत्त्योर्मूत्रणे हदने तथा ॥ ५३७ ॥
विकासे मीलने ह्रासे नाशस्फूर्तिसमृद्धिषु ।
तोषे दोषे विरागे च विषादोन्मदसिद्धिषु ॥ ५३८ ॥

प्रभातस्तम्भदम्भेषु शुक्लिमादिगुणेषु च ।
ध्वाने क्लीबे दरिद्रत्वे ग्लानिगर्वश्रमेष्वपि ॥ ५३९ ॥
क्षोभादिषु तथार्थेषु धातवः स्युरकर्मकाः ।
आय्यन्ता लोहिताद्याश्च तथा ये नामधातवः ॥ ५४० ॥
आत्मनस्तत् तदिच्छार्था भवेयुस्तेऽप्यकर्मकाः ।
अन्यत्राऽपि बुधैर्ज्ञेया धातुभेदा यथायथम् ॥ ५४१ ॥
अङ्कुरयति कोरकयति पल्लवयति बहुलयत्यपि च ।
आकुलयति कुण्डलयति कण्टकयति कुटिलयत्यपि च ॥ ५४२ ॥
मन्थरयति दन्तुरयत्यधरयति च बधिरयत्यपि च ।
विफलयति च सफलयति च वर्तुलयति सकलयत्यपि च ॥ ५४३ ॥
अङ्कुशयति वागुरयति निगडयति च निबिडयत्यपि च ।
स्थपुटयति ताण्डवयति स्तबकयति तरङ्गयत्यपि च ॥ ५४४ ॥
धवलयति गौरवयति च पाटलयत्यरुणयत्यपि च ।
मेचकयति पिञ्जरयति च धूसरयति मलिनयत्यपि च ॥ ५४५ ॥
उज्ज्वलयति निर्मलयत्युत्तंसयत्यवतंसयति ।
मधुरयति विधुरयति पुलकयति तिलकयत्यपि च ॥ ५४६ ॥
सामस्त्यादभिधातुं नाम्नोऽनन्ताः के नाम पार्यन्ते ।
अभिधानशास्त्रदृष्टाच्छब्दादेव स्वयं योज्याः ॥ ५४७ ॥

॥ इति धातुपर्यायसङ्ग्रहः ॥

# कतिपय परीक्षोपयोगी प्रश्नोत्तरात्मक-ग्रन्थ

| | |
|---|---|
| साहित्यदर्पणालोकः ( प्रश्नोत्तरात्मकः )। श्री रामजी लाल शर्मा | १२—०० |
| काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री रामजी लाल शर्मा | १२—५० |
| चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः )। मानवल्ली तथा वेताल | १०—०० |
| शिशुपालवध-रहस्यम् (प्रश्नोत्तरात्मकः)। १—४ सर्ग। अशोकचन्द्र गौड़ | १०—०० |
| सांख्यकारिकादर्शः ( प्रश्नोत्तरात्मकः )। श्री राजेन्द्रप्रसाद कोठयारी | ६—५० |
| अलङ्कारशास्त्रस्येतिहासः ( प्रश्नोत्तरात्मकः )। श्रीपरमेश्वरदीन पाण्डेय | ६—०० |
| नलचम्पू-रहस्यम् (प्रश्नोत्तरात्मकः)। १—५ उच्छ्वास। परमेश्वरदीन पाण्डेय | ८—०० |
| वेदान्तसार-प्रदीपः ( प्रश्नोत्तरात्मकः )। श्री राजेन्द्रप्रसाद कोठयारी | ६—०० |
| मध्यसिद्धान्तकौमुदी-चन्द्रिका (प्रश्नोत्तरात्मकः)। विजयमित्र शास्त्री | २५—०० |
| मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा | १०—५० |
| वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री परमेश्वरदीन पाण्डेय | ८—०० |
| नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः )। १—५ सर्ग। श्री रमाशंकर मिश्र | १४—०० |
| दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री त्रिलोकनाथ द्विवेदी | १०—०० |
| भट्टिकाव्य-दर्पणः ( प्रश्नोत्तरात्मकः )। श्री प्रज्ञान भिक्षु। १—४ सर्ग | १०—०० |
| ५—८ सर्ग | १०—०० |
| भट्टिकाव्यालोकः (प्रश्नोत्तरात्मकः)। रमाशंकर त्रिपाठी। १४—१७ सर्ग | १०—०० |
| १८—२२ सर्ग | १०—०० |
| चन्द्रकला-नाटिकारहस्यम् ( प्रश्नोत्तरात्मकः )। श्री परमेश्वरदीन पाण्डेय | ३—५० |
| संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः )। श्री परमानन्द शास्त्री | ७—५० |
| रसगङ्गाधर-हृदयम् ( प्रश्नोत्तरात्मकः )। श्री ज्ञानचन्द्र त्यागी | १२—५० |
| लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः )। विजयमित्र शास्त्री | १५—०० |
| कादम्बरी-कला-प्रकाशः ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा | १२—५० |
| लघुमञ्जूषारहस्यम् ( प्रश्नोत्तरात्मकः )। स्वामी रामेश्वर पुरी | ५—०० |
| मुद्राराक्षसम् ( प्रश्नोत्तरात्मकः )। श्री लोकमणि दहाल | १२—५० |
| शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) श्री त्रिलोकीनाथ द्विवेदी | १२—५० |
| मेघदूत-तत्त्वालोकः। डॉ० अशोकचन्द्र गौड़ शास्त्री | ७—०० |
| महाभाष्य-प्रदीपः ( प्रश्नोत्तरात्मकः )। श्री विजयमित्र शास्त्री | १०—०० |
| मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी )। श्री राजेन्द्रप्रसाद कोठयारी | १०—०० |
| औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा | ८—०० |
| वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा | ७—५० |
| विक्रमांकदेवचरितम् ( प्रश्नोत्तरात्मकः )। डॉ० अशोकचन्द्र गौड़ | ६—०० |